प्राज्ञैर्महापूरुषसर्वलक्षणैः
सम्पन्नदेहोऽयमितीरिते प्रभौ ।
परे परस्याप्यतिपीनतादृशः
स्फिङ्गात्रसंशंसनमेव चक्रिरे ॥ ४० ॥

स्फिग्दूषणानि प्रतिपादयत्यलं
सम्पूर्णसङ्क्येऽस्य तु लक्ष्मशास्त्रतः ।
तद्दण्डसङ्खण्डनसंश्रवं व्यधात्
तदक्षमोऽसौ प्रकृतिर्हि साऽसताम् ॥ ४१ ॥

स्नात्वाऽत्र तीर्थेष्वचिरेण कन्यका-
तीर्थे सुतीर्थे सुखतीर्थ आप्लुतः ।
समुद्रसेतौ च निमज्य विष्णवे
श्रीरामनाथाय नमश्चकार सः ॥ ४२ ॥

तमाव्रजन्तं यतिवेषधारिणं
दण्डं प्रकाश्यैष हसन्नभाषत ।
खण्ड्येत दण्डो यदि चण्ड न त्वया
त्वं पण्डकोऽपण्डित वन्ध्यवागिति ॥ ४३ ॥

लज्जानतः स्वार्थमथार्थयन्नस-
न्नुपैक्ष्यतासौ द्विजनायकैस्तदा ।
आनन्दयन्तं वदनेन्दुना जगत्
तं द्वेष्टि कः प्राज्ञमिहेति वादिभिः ॥ ४४ ॥

यायाः प्रसक्ताः परिषत्सु पूरुषै-
र्विद्याविदग्धैर्विविधैः समागमे ।
स तासुतासु प्रतिभातिभासुरो
विद्यासु विद्याधिपतिर्जिगाय तान् ॥ ४५ ॥

अचाल्यमानः सगुरुः स चापलै-
रसज्जनानामबलीयसामिह ।
उवास मासांश्चतुरो महामनाः
सिंहो गुहान्तोपगतः शुनामिव ॥ ४६ ॥

शृङ्गारसिन्धुं स भुजङ्गशायिनं
श्रीरङ्गवासं कृतमङ्गलं सताम् ।
अमन्दधीर्देवमवन्दताऽगतः
कवेरकन्याहिमवायुसेवितम् ॥ ४७ ॥

ततो निवृत्तः परमेव पूरुषं
प्रणम्य नानायतनेषु सञ्चरन् ।
प्रकाशयन् स्वातिशयानमानुषा-
नाशामुदीचीं प्रययावसौ क्रमात् ॥ ४८ ॥

ततस्ततो विस्मितलोचनैर्नरै-
र्निरीक्ष्यमाणोऽतिसुलक्षणाकृतिः ।
ग्रामोत्तमान् प्राप्य पयस्विनीतटे
विवेश देवायतनं स किञ्चन ॥ ४९ ॥

अधीत्य धर्मेण षडङ्गमागमं
तदर्थसंवर्णननिर्णयान्विताः ।
प्रापुर्द्विजेन्द्रास्तमपूर्वपूरुषं
जिज्ञासवः सुप्रथितं जगत्त्रये ॥ ५० ॥

सुस्मितेन्दुमरविन्दलोचनं
स्वर्णवर्णमतिभद्रभाषणम् ।
वीतभूषमपि विश्वभूषणं
तं दिदृक्षुरलमापतज्जनः ॥ ५१ ॥

विद्योरुद्युतिधीरतारकतिरस्कारे पतङ्गायितो
दुर्वादीभकुतर्ककुम्भदलने सिंहप्रबर्हायितः।
लोलालोकक-लोकदृक्कुमुदिनीसंह्लादनेऽब्जायितः
संसन्मण्डलमण्डनायित उत स्वानन्दतीर्थो बभौ ॥ ५२ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते पञ्चमः सर्गः ॥

# षष्ठः सर्गः

ऐतरेयमथ किञ्चन सूक्तं
सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः
सूक्तभावमिति तावदुवाच ॥ १ ॥

वर्णसौष्ठवगरिष्ठमतूर्णं
तुल्यमात्रमतिमात्रसुलक्ष्म ।
व्यूढहृज्जलदघोषममुष्यो-
च्चारणं विदधदभ्यधितार्थम् ॥ २ ॥

लक्षणान्विततया वचनेऽस्मिन्
देवतागुरुमसावतिशेते ।
मानमित्यपि विधाय धिया ते
तत् तु सूक्तमपरार्थमवोचन् ॥ ३ ॥

स्यात् तथेत्थमपि सम्भवितार्थ-
स्त्र्यर्थतां श्रुतिषु वित्त दशार्थम् ।
भारतं ननु शतार्थमपि स्याद्
वैष्णवं पदसहस्रतयं हि ॥ ४ ॥

इत्युदीरयति विस्तृतचित्ते
भूसुरा इह जिगीषव एनम् ।
ऊचुरर्थशतकं हरिनाम्नां
वर्ण्यतामिति सहासमुखास्ते ॥ ५ ॥

वर्णयामि तदहं सकलं वः
सौष्ठवादनुवदन्तु भवन्तः ।
तं वदन्तमिति तेऽथ वदन्तो
बाढमित्यतिदृढोद्यममापुः ॥ ६ ॥

प्रत्ययप्रकृतिसङ्गमभङ्गीं
शब्दशास्त्रविहितां प्रतिदर्श्य ।
शुद्धधीः श्रुतिशिरःशतसिद्धा-
नभ्यधात् सपदि विश्वपदार्थान् ॥ ७ ॥

यावदर्थशतकं न विशङ्कः
सन्ततोक्तिकृदपूपुरदेषः ।
वर्णितावधृतिदुर्बलचित्ता-
स्तावदाकुलहृदो ह्यभवंस्ते ॥ ८ ॥

साङ्गवेदचतुरा इतिहासे
शिक्षिताः सुबहवोऽप्यतिधृष्टाः ।
नैतदीरितमहो जगृहुस्ते
विश्वसंक्षयपयोऽन्धुगणा वा ॥ ९ ॥

देवतास्वसुलभा प्रतिभा ते
मानुषेषु चपलेषु कथा का ।
क्षाम्य सौम्य सकलज्ञ नमस्ते
ते ब्रुवन्त इति तं किल नेमुः ॥ १० ॥

वेदशास्त्रचतुरैरिह विद्या-
वित्तलिप्सुभिरवाप्तमशेषैः ।
प्राप केरळसुमण्डलजातै-
रन्यदायतनमायतचेताः ॥ ११ ॥

तर्कतन्त्रकुशलानपि पुंस-
श्चर्करीति बत सोऽयममानान् ।
मानमानमयतीह कथं नो
नैष मण्डलभुवां समितानाम् ॥ १२ ॥

मन्त्रयन्त इति ते द्विजवर्या
अन्यदेशजमुखास्तसपृच्छन् ।
सद्ददाददसुशंसननिन्दा-
कारिसूक्तगतमर्थमुपेत्य ॥ १३ ॥

तं स्फुटं प्रकथयन् स पृणीया-
च्छब्दमूलमवदत् पृणधातुम् ।
तं जिगीषुमथ विप्रमदः प्री-
धातुमेष निगदन्तमुवाच ॥ १४ ॥

प्रादिभेदमविदन् गुणय त्वं
मूढ पांसुषु लिखन् लिपिसङ्घम् ।
भर्त्सयन्निति जहास सुहासो
मत्सराकुलधियो जडयन् सः ॥ १५ ॥

तत्प्रसङ्गबलतोऽखिलविद्या-
पाटवं पृथुहृदः प्रतिबुध्य ।
आनमन् सबहुमानममी तं
यं नमन्ति किल नाकिनिकायाः ॥ १६ ॥

कन्यकाहृतसुरेन्द्रवपुःश्री-
दानवाचिवरसूक्तहृदुक्तौ ।
कुत्रचित् सदसि तावदपाला
कीर्तिताऽतितरुणीत्ययमूचे ॥ १७ ॥

श्वित्रिणी भवति तत्पदवाच्ये-
त्याग्रहेण वदतोऽविदुषोऽत्र ।
कश्चिदेष्यति विपश्चिदिहैनं
पृच्छतेत्ययमगच्छदथोक्त्वा ॥ १८ ॥

देशमेनमचिरादुपयात-
स्तादृशाकृतिरहो कृतबुद्धिः ।
तांस्तथाऽभ्यधित तत्पदभावं
सूरिमौलिमणिनाऽत्र यथोचे ॥ १९ ॥

केवलं न सकलाः श्रुतिविद्या
मानपूर्वकसमस्तगिरोऽस्य ।
अप्यनागतगतप्रतिपत्तिं
श्रद्दधुः पृथुलचेतस एते ॥ २० ॥

यद्यदेव सपदि प्रकृतं स्यात्
तत्तदेष यदवेदखिलं च ।
सर्वदा सदसि सर्वबुधानां
सर्ववित्यतिरिति प्रथितोऽभूत् ॥ २१ ॥

अप्रयातमपि देशमशेषं
व्यानशे सुजनकैरवबन्धुः ।
पूर्णदृक् प्रततया निजकीर्त्या
पूर्णचन्द्र इव चन्द्रिकयाऽलम् ॥ २२ ॥

सुन्दरेषु सुरमन्दिरवृन्दे-
ष्विन्दिरारमणवन्दनकृत्यम् ।
आचरन्नसुचिरात् सुविचारो
रूप्यपीठपतिमाप मुकुन्दम् ॥ २३ ॥

भूसुरप्रवरबुद्धिसमृद्धि-
व्यक्तयुक्तवपुषं रुचिराङ्गीम् ।
सूत्रदीप्तमणिमालिकयाऽलं
भूषितां भुवनभूषणभूताम् ॥ २४ ॥

पादसुन्दरपदक्रमभावै-
र्भासितां प्रकटवर्णगुणाढ्याम् ।
भारतोत्तमभृतामनुरूपा-
च्छादनां समधिकस्वरशोभाम् ॥ २५ ॥

राजसूयमुखसन्मखवृत्तां
वासुदेवगुणनिष्ठितभावाम् ।
सर्वधर्मपरिशिक्षणदक्षां
वन्दितां जनतया जननीवत् ॥ २६ ॥

मौलिसङ्ग्रहविकर्षणदूनां
मायिना सदसि दुष्टजनेन ।
न्यायमार्गमपहाय महान्तं
स्वेश्वरत्वमपि साधयताऽलम् ॥ २७ ॥

सज्जनैः कतिपयैरतिदीनै-
श्चालितैः कलिबलाच्छुभमार्गात् ।
अप्युपेक्षितविकर्षणदुःखां
सातिशोकमपि कैश्चन दृष्टाम् ॥ २८ ॥

वासुदेवधरणीधरनाथे-
त्युच्चकैरपि मुहुः प्रवदन्तीम् ।
पूर्णसद्गुणमजं गतदोषं
बिभ्रतीं हृदि विविक्तमशेषात् ॥ २९ ॥

वार्यतां बुधजनैर्ननु हाहा
नैष धर्म इति चाभिदधानाम् ।
कृष्णलालिततमामनवद्या-
मप्यनन्यशरणां शरणोत्काम् ॥ ३० ॥

वेदिजामिव पुरा भरताग्र्यः
स स्वयं श्रुतिततिं खलु दृष्ट्वा ।
पुष्टबुद्धिरकरोत् करुणाब्धि-
र्दुष्टपक्षदमनस्थिरसन्धाम् ॥ ३१ ॥

अव्ययं सततमप्युपभुक्त्या
वित्तमग्र्यमिव दूरयियासुः ।
ज्यायसे सगुरवे हरिगीता-
भाष्यमेष विरचय्य तदाऽदात् ॥ ३२ ॥

हेतुवादिनि विशङ्कटबुद्धौ
तीर्थमर्थयति गन्तुमनुज्ञाम् ।
तां दिदेश पुरुषोत्तमतीर्थ-
श्चिन्तयन् स पुरुषोत्तमरक्षाम् ॥ ३३ ॥

नीरजा मलयमण्डलवृत्त्या
श्लाघितो भुवि सदाळ्यनुयातः ।
साधुपान्थपरितापमपास्य-
न्नुत्तरां दिशमयान्मरुदंशः ॥ ३४ ॥

बुद्धिशुद्धिकरगोनिकराढ्यं
तीर्थजातमुभयं च धरण्याम् ।
आत्ममज्जनत एव निकामं
पर्यशोधयदमन्दमनीषः ॥ ३५ ॥

वासुदेवपदसन्ततसङ्गी
तेजसाऽप्यलमधःकृतशर्वः ।
अत्यवर्तत नितान्तमथासौ
गाङ्गमोघमघनाशनकीर्तिः ॥ ३६ ॥

तत्रतत्र स जगत्त्रयचित्रं
कर्म शर्मदमनुस्मृतिमात्रात् ।
सञ्चरन् विदधदाप नराणां
गोचरं बदरिकाश्रमपाश्र्वम् ॥ ३७ ॥

मण्डयन् भरतखण्डमखण्डं
नादिरायणपदोऽत्र परो यः ।
तं नमन् प्रचुरधीर्हरिगीता-
भाष्यमार्पयदुपायनमस्मै ॥ ३८ ॥

प्रीतयेऽस्य पुरतो वरभाष्यं
वाचयन् स जनतामपसार्य ।
वच्मि शक्तित उरुक्रमगीता-
भाष्यमित्यकथयत् पुरुसङ्घः ॥ ३९ ॥

एतदर्थमतिसूक्ष्ममपि त्वं
शक्त एव न यदात्थ समस्तम् ।
तेन लेशत इतीह पदं स्या-
दित्यगद्यत जगज्जनकेन ॥ ४० ॥

तेन तत्प्रवचने विहितेऽलं
शुश्रुवुः प्रशयिता अपि शिष्याः ।
उच्यतामिति मुहुः सपृथिव्या-
स्फालनं पदमहो हरिणोक्तम् ॥ ४१ ॥

शब्दभेदमवधार्य तमर्चा-
सन्निषण्णवपुषः परमस्य ।
तस्य भावविदमन्दमनीषः
प्रोत्थितः प्रवचनं व्यधितैभ्यः ॥ ४२ ॥

मज्जनं व्यधित शीतळगङ्गा-
वारि नित्यमरुणोदयकाले ।
यत् स्पृशन्ति न नरा हिमभीता
अंश एष पृषतामधिपस्य ॥ ४३ ॥

काष्ठमौनमदधादुपवासं
शुद्धमप्यकृत शुद्धहृदिच्छन् ।
नित्यतुष्टहरितोषविशेषं
चिन्तयन् प्रभुमनन्तमठान्तः ॥ ४४ ॥

प्रैरयत् स्वचरणे रतचित्तं
मध्वमत्र दिनमण्डलमेनम् ।
स्वाश्रमोपगमनाय मुकुन्दो
दीप्तिदृष्टिविदितागतिरन्यैः ॥ ४५ ॥

नक्तमेव भगवत्युपयाते
प्रोदिते सति सहस्रमरीचौ ।
मौनवानलिखदुत्तमचित्तः
शिष्यशिक्षणपरः करुणावान् ॥ ४६ ॥

नेदृशं स्थळमलं शमलघ्नं
नास्य तीर्थसलिलस्य समं वाः ।
नास्मदुक्तिसदृशं हितरूपं
नास्ति विष्णुसदृशं ननु दैवम् ॥ ४७ ॥

याति तावदधुनैव जनोऽयं
व्यासरूपमजितं प्रदिदृक्षुः ।
आव्रजेदिह न वा स हि वेद
स्वस्ति वोऽस्त्विति ययावथ मध्वः ॥ ४८ ॥

नाथनाथ बत नोऽत्र विनाथान्
मा त्यजोरुकरुणो भगवंस्त्वम् ।
नोदितं स्मृतमपीति हि शिष्यैः
स्वामिनोऽभिमतभङ्गभयेन ॥ ४९ ॥

सद्गुरोर्न विरहं सहमानः
सत्यतीर्थयतिरन्वगमत्तम् ।
यस्त्रिवारमितरासुतशाखा-
स्वर्थमग्र्यमशृणोत् पुरुसङ्ख्यात् ॥ ५० ॥

दुर्गमार्गगतमप्यनुधाव-
न्नाऽप सोऽयमरुणीभवतीने ।
लीलया सजवमाक्रममाणं
व्याश्रयान्तरसुदूरशिलासु ॥ ५१ ॥

आनिवृत्तवपुषा गुरुणाऽऽरात्
पाणिना ह्यभिनयेन सुनुन्नः ।
त्रस्तधीरतिययौ स मुहूर्तात्
तद्दिनोपगतमार्गमशेषम् ॥ ५२ ॥

आश्रमे निजजनानिह दृष्ट्वा
तं प्रसादमहिमानममुष्य ।
प्रोच्य तत्प्लवनमप्यतिचित्रं
तस्य तैः सह सदाऽस्मरदेषः ॥ ५३ ॥

वानरेन्द्र इव वायुजवोऽसौ
भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुङ्गवशृङ्गे
स व्रजन् व्रजिननाशननामा ॥ ५४ ॥

बहुसत्त्वगुणं सविकं समहा-
विषमोक्षमहाहिमवन्तमयम् ।
विषमोक्षमहाहिमवन्तमय-
न्नगमैक्षत पुलदृगस्तभयः ॥ ५५ ॥

सुहसितकमलाकरोपगूढं
सुजनसुखार्थमनन्तभोगशय्यम् ।
विकसितसुमनोघटागमुच्चं
मरतकरत्नमयस्थलग्र्यशोभम् ॥ ५६ ॥

पादोपान्तनमन्महामुनिगणं हेमप्रदीप्ताम्बरं
श्रीमद्रत्नकलापमग्र्यकटकैर्विभ्राजितं हाटकैः ।
दृष्ट्वा तं धरणीधरं सुवनमालोल्लासिनं सुन्दरं
स्वानन्दाकृतिमस्मरन्मुररिपुं स्वानन्दतीर्थस्तदा ॥ ५७ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते षष्ठः सर्गः ॥

# सप्तमः सर्गः

अथ हैमवते तटान्तरे
बदरीषण्डविशेषमण्डितम् ।
परमाश्रममाश्रयं श्रियः
सकलज्ञः स ददर्श विश्रुतम् ॥ १ ॥

हिमवर्षरविप्रभासहाः
पृथुसत्रप्रथिता द्विजाश्रयाः ।
अपि विष्णुपदस्पृशोऽलस-
न्नुभये यत्र विचित्रशाखिनः ॥ २ ॥

श्रवणामृतगीर्गणैर्द्विजैः
शुकमुख्यैः शुभपक्षिभिर्वृतम् ।
कमलेष्टतमस्थिरान्तरै-
रपि हंसैः परमैरमेचकैः ॥ ३ ॥

सुमनोनिकरेण पूरितं
स्वमनोऽभीष्टदमल्पदुर्गमम् ।
अपरस्परमत्सरप्रजं
ननु वैकुण्ठमिवाच्युतालयम् ॥ ४ ॥

तमिमं प्रविशन्तमाश्रमं
द्व्यधिकत्रिंशदुदारलक्षणम् ।
गुणसारविदः कुतूहला-
दवलोक्यर्षय इत्यचिन्तयन् ॥ ५ ॥

कनकातुलतालसन्निभः
कमलाक्षो विमलेन्दुसन्मुखः ।
गजराजगतिर्महाभुजः
प्रतियान् कोऽयमपूर्वपूरुषः ॥ ६ ॥

अतिशान्तवपुर्निशाकरः
स्वयमेकान्तखरो दिवाकरः ।
इति नास्य गुणार्णवाकृते-
रुपमानं भुवनेषु लभ्यते ॥ ७ ॥

परमाश्रमिणां गतश्रमो
ननु चिह्नानि बिभर्ति धीरधीः ।
अपि मानुषभावविग्रहो
विपुलं विस्मयमातनोति नः ॥ ८ ॥

चतुरश्चतुराननः स्वयं
पवनो वा व्रतिरूप आव्रजन् ।
श्रुतिनाथदिदृक्षयाऽन्यथा
न खलु स्यान्निखिलाग्र्यलक्ष्मवान् ॥ ९ ॥

अवलोकितलक्षणः स तै-
रिति सञ्चिन्त्य कुतूहलाकुलैः ।
अविळम्बगतिर्न्यशामयत्
तरुमारात् सुरपादपोत्तमम् ॥ १० ॥

मसृणत्वचमुन्नतं ततं
बहुशाखाफणसूनरत्नकम् ।
भगवन्तमनन्तमन्तिके
स्थितमीशस्य निषेवणाय वा ॥ ११ ॥

अतिचित्रविचित्रपत्रिणं
बहुवर्णं हरिगोनिवारकम् ।
मुनिनन्दनमिन्दिरापते-
रधिकेष्टं पततामिवाधिपम् ॥ १२ ॥

अमृतात्ममहाफलप्रदं
दुरवापं हरिभक्तिवर्जितैः ।
श्रितसाधुपुराणभारतं
निगमं मूर्तमिवोरुशाखिनम् ॥ १३ ॥

अथ तस्य स वेदिकान्तरे
सुविशाले विमले मनोहरे ।
अवलोकितवाननन्तधी-
र्दिवि देवानिव तापसोत्तमान् ॥ १४ ॥

अपि सप्ततया विराजितान्
गतसङ्ख्यान् गुणिनो गुणोज्झितान् ।
अपि मन्युमदादिवर्जितान्
गतभोगान् पवनाशनान् सदा ॥ १५ ॥

मुनिमण्डलमध्यवर्तिनं
त्रिजगन्मण्डलमण्डनायितम् ।
इह सत्यवतीसुतं हरिं
परिपूर्णप्रमतिः समैक्षत ॥ १६ ॥

निजहृत्कमलेऽतिनिर्मले
सततं साधु निशामयन्नपि ।
अवलोक्य पुनःपुनर्नवं
तमसौ विस्मित इत्यचिन्तयत् ॥ १७ ॥

अगणय्यगुणार्णवोऽमलः
स हि नारायण एष केवलम् ।
विधिनाऽनुसृतं पराशरात्
सुषुवे सत्यवती किलात्र यम् ॥ १८ ॥

धवलेऽस्य मनःपयोनिधौ
सदनुक्रोशगिरीन्द्रलोळिते ।
प्रकटीभवति स्म सुन्दरी
दयिता दैत्यरिपोस्त्रयीमयी ॥ १९ ॥

इत एव पुराणगौरगौ
समहाभारतपारिजातके ।
सति जातवति व्यजायत
प्रवरं सूत्रगणामृतं स्वयम् ॥ २० ॥

निरवग्रहमुर्वनुग्रहं विदधत्
पाण्डुसुतादिसज्जने ।
अवनाववनाय संविदां
सुचिरायैष चचार चारुगीः ॥ २१ ॥

अधुना कलिकालवृत्तये
सवितेव क्षणदानुवृत्तये ।
जनदृग्विषयत्वमत्यजत्
भगवानाश्रममावसन्निमम् ॥ २२ ॥

तदिदं वपुरस्य दृश्यते
दळितेन्दीवरसुन्दरद्युति ।
परमाजिनयोगपीठगं
मम चेतोनयनाभिनन्दनम् ॥ २३ ॥

अगणय्यगुणैः सुपूरितं
परिपूर्णागणितात्मसद्गुणैः ।
इदमस्तसमस्तदूषणं
सच्चिदानन्दमयं हि केवलम् ॥ २४ ॥

कमलाकमलासनानिलै-
र्विहगाहीन्द्रशिवेन्द्रपूर्वकैः ।
पदपद्मरजोऽस्य धारितं
शिरसा हन्त वहाम्यहं मुहुः ॥ २५ ॥

प्रणमामि पदद्वयं विभो-
र्ध्वजवज्राङ्कुशपद्मचिह्नवत् ।
निजमानसरागपीडना-
दरुणीभूतमिवारुणं स्वयम् ॥ २६ ॥

ननु केवलमेव वैष्णवं
श्रितवन्तः पदमात्मरोचिषा ।
तमसोऽप्युभयस्य नाशका
विजयन्ते नखरा नवं रविम् ॥ २७ ॥

सुकुमारतळाङ्गुलीमतोः
पदयोरस्य निगूढगुल्फयोः ।
उपमानमहो न लभ्यते
कविवर्यैरितरेतरं विना ॥ २८ ॥

उचितां गुरुतां दधत् क्रमा-
च्छुचि तेजस्वि सुवृत्तमुत्तमम् ।
भजतोऽत्र च भाजयत्यदो
विभुजङ्घायुगळं सरूपताम् ॥ २९ ॥

अचलासनयोगपट्टिका
वरकक्ष्या सकृदाप्तमिष्टदम् ।
परितोऽपि हरिं स्फुरन्त्यहो
अनिशं धन्यतमेति मे मतिः ॥ ३० ॥

रुचिरेण वरैणचर्मणा
रुचिराजद्युतिचारुरोचिषा ।
परमोरुनितम्बसङ्गिना
परमाश्चर्यतया विराज्यते ॥ ३१ ॥

तनुनिम्नसुनाभिशोभिते
वलिभे वारिजनाभ आदधे ।
प्रतनावतिसुन्दरे मृदा-
वुदरेऽस्मिन् जगदण्डमण्डलम् ॥ ३२ ॥

हृदये कृतसज्जनोदये
सुविशाले विमले मनोहरे ।
उभयं वहति त्रयीमयं
भगवान् ब्रह्मसुसूत्रमुत्तमम् ॥ ३३ ॥

असमेऽनधिके सुसाधिते
निजताते रविराशिदीधिति ।
प्रददौ त्रिजगज्जयध्वजं
विधिरेतद्गळसङ्गि भूषणम् ॥ ३४ ॥

अरिवारिजलक्षणोल्लसत्-
सुकुमारारुणपाणिपद्मयोः ।
पृथुपीवरवृत्तहस्तयो-
रुपमां नैव लभामहेऽनयोः ॥ ३५ ॥

भजतां वरतर्कमुद्रया
द्यति हस्ताग्रमबोधमीशितुः ।
अधिजानु समर्पितं परं
कृतभूयोभयभङ्गमङ्गलम् ॥ ३६ ॥

सततं गळता स्वतः श्रुति-
त्रितयेनेव निकाममङ्कितः ।
सुविडम्बितकम्बुरीक्ष्यते
वररेखात्रयवान् गुरोर्गळः ॥ ३७ ॥

सकलास्तकलङ्ककालिम-
स्फुरदिन्दुप्रकरोरुविभ्रमम् ।
अधरीकुरुते स्वशोभया
वदनं देवशिखामणेरिदम् ॥ ३८ ॥

अरुणाश्मदलान्तरोल्लस-
न्नवमुक्तावलिमस्य लज्जयेत् ।
हसतः सितदन्तसन्ततिः
परमश्रीररुणोष्ठरोचिषः ॥ ३९ ॥

द्विजवृन्दकृतं कुतूहला-
दनुयोगान्धुसहस्रमुत्तमम् ।
इयमेकपदे सरस्वती
श्रुतिभर्तुः परिपूरयत्यहो ॥ ४० ॥

जलजायतलोचनस्य मा-
मवलोकोऽयमुपेत्य लाळयन् ।
कुरुते परिरभ्य पूरितं
भुवनानन्दकरस्मितान्वितः ॥ ४१ ॥

उपकर्णममुष्य भासिता
तुळसी मन्त्रयतीव लाळिता ।
मम नाथ पदं न मत्सरा-
ज्जलजाद्यानि हरेयुरित्यलम् ॥ ४२ ॥

विभवाभिभवोद्भवादिकं
भुवनानां भुवनप्रभोर्भ्रुवोः ।
अनयोरपि दभ्रविभ्रमात्
सभवाम्भोजभवात्मनां भवेत् ॥ ४३ ॥

त्रिजगत्तिलकाळिकान्तरे
तिलकोऽयं परभागमाप्तवान् ।
हरिनीलगिरीन्द्रमस्तक-
स्फुटशोणोपलपङ्क्तिसन्निभः ॥ ४४ ॥

नवमम्बुधरं विडम्बयद्
वरविद्युद्वलयं जगद्गुरोः ।
अवलोक्य कृतार्थतामगां
सजटामण्डलमण्डनं वपुः ॥ ४५ ॥

न रमाऽपि पदाङ्गुलीलस-
न्नखधूराजदनन्तसद्गुणान् ।
गणयेद् गणयन्त्यनारतं
परमान् कोऽस्य परो गुणान् वदेत् ॥ ४६ ॥

न कुतूहलिता कुतूहलं
तनुमेनामवलोक्य सद्गुरोः ।
सनवावरणाण्डदर्शिनो
गृहबुद्ध्या मम निष्कुतूहलम् ॥ ४७ ॥

इति चिन्तयता महाधिया
पदवीं बाह्यगतामधीयुषा ।
स मनोनयनैः पुरा गत-
स्तत आपे वपुषाऽपि वेदराट् ॥ ४८ ॥

गुरुभक्तिभरानताकृति-
र्विरचय्याञ्जलिबन्धमञ्जसा।
क्षणमामुकुळीकृतेक्षणः
स गुरुं केवलमभ्यवन्दत ॥ ४९ ॥

विनयाभरणेन भूषितः
स्फुटमष्टाङ्गविशिष्टचेष्टितः ।
भगवत्तमपादपङ्कजे
भगवान् स प्रणनाम भाग्यवान् ॥ ५० ॥

स निरीक्ष्य पराशरात्मजः
प्रणतं प्रेष्ठमशेषसद्गुणैः ।
करयोर्युगलेन वल्गुना
तमुदस्थापयदाशुपातिना ॥ ५१ ॥

अमितप्रमतिं श्रुतीश्वरः
परिरेभे परिगृह्य तं द्रुतम् ।
प्रणयामृतपूर्णमानसः
स्मितवक्त्रः परिफुल्ललोचनः ॥ ५२ ॥

यमजाम्युदवास ऊर्जितो
यदि जाम्बूनदवारि संव्रजेत् ।
कनकद्युतिमध्वसङ्गवा-
नुपमीयेत स तेन नीलभाः ॥ ५३ ॥

यदि राजविभूषणैर्युतौ
द्विजवर्यान्वयजाविमौ हरी ।
नृपगोत्रभुवोः पुराऽत्मनोः
स्फुटतुल्यावुपगूढयोर्मिथः ॥ ५४ ॥

इदमाप शुकोऽपि लाळनं
न समग्रं जगतां पितुः पितुः ।
अलभिष्ट यदेष धन्य इ-
त्यतिकौतूहलमापि तापसैः ॥ ५५ ॥

अमुष्य शिष्या विनयेन तस्मै
गुरोरभिप्रायविदो विदग्धाः ।
तदाऽनुरूपं ददुरासनं ते
चतुर्मुखायेव मुकुन्ददासाः ॥ ५६ ॥

आस्यतामित्युदीर्योपविष्टे
सत्यवत्याः सुते सत्यवाचि ।
नन्दयन् मन्दहासावलोकै-
स्तान् मुनीन्द्रानिहोपाविशत् सः ॥ ५७ ॥

अवगम्य तं मुनिगणा वरिष्ठतो
विधिवद् व्यधुर्विधिविदोऽस्य माननाम् ।
अपि सङ्कथाः श्रुतिसुखाः कवीन्द्रयो
रनयोर्निशम्य परमां मुदं ययुः ॥ ५८ ॥

सज्ज्ञानायाऽनन्दविज्ञानमूर्ती
प्राप्तौ पृथ्वीमाश्रमे तत्र तावत् ।
जाज्वल्येते विष्णुवायू स्म देवौ
वेदव्यासानन्दतीर्थाभिधानौ ॥ ५९ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते सप्तमः सर्गः ॥

# अष्टमः सर्गः

प्रतिभाप्रभाप्रमुखसद्गुणैर्निजै-
रतिविस्मयं नियमिनां मनो नयन् ।
पुरुधीः कदाचिदथ वेदनायकं
विजने शनैरुपससाद तं वने ॥ १ ॥

सुविशेषशेषवदशेषवर्णित-
प्रतिबोद्धुरस्य ननु शिष्यतोचिता ।
गुरुमानसस्य गुरुताऽपि सत्पते-
रिति सोपसत्तिरमरैरमान्यत ॥ २ ॥

पुर एव पूरितमपूरयत् पुन-
र्ननु कृष्ण एष परमार्थसञ्चया ।
भगवन्मनः पुरमिवाऽयतं पुरा
निजधाम तां च जगृहे तदद्भुतम् ॥ ३ ॥

इतिहाससुन्दरपुराणसूत्रसत्-
प्रियपञ्चरात्रनिजभावसंयुतम् ।
अशृणोदनन्तहृदनन्ततोऽचिरात्
परमार्थमप्यगणितागमावलेः ॥ ४ ॥

ऋजुपुङ्गवस्य परिजानतः स्वयं
सकलं तदप्यलमनन्तजन्मसु ।
स्वकृतोर्वनुग्रहबलादमुष्य तां
विशिशेष शेषशयनः पुनर्धियम् ॥ ५ ॥

अथ बादरायणसहायसम्पदा
प्रययौ प्रणन्तुममितान्तरो युतः ।
अपि नादिरायणपदोदितं हरे-
र्वपुरन्तरं लसितमाश्रमान्तरे ॥ ६ ॥

तमपश्यदाश्रमवरे प्रभूतधी-
र्ज्वलनं ज्वलन्तमिव धूमवर्जितम् ।
वरवल्कलाकलितमौञ्जिमेखलं
विलसज्जटावलयमादिपूरुषम् ॥ ७ ॥

अतिदुर्जयेन्द्रियजयादिरूपिणा
तपसा वसन्तमिव सन्ततं वने ।
निजरूपभूतनिरपेक्षनिर्मल-
प्रचुरात्मसौख्यरतमप्यनारतम् ॥ ८ ॥

नयनद्वयेन नळिनप्रभामुषा
परिफुल्लताविलसितेन विस्मयात् ।
तमवेक्ष्य धर्मजमधर्मदुर्लभं
मनसेति भूरितरमानसोऽस्मरत् ॥ ९ ॥

जगतां चतुर्दशतयं चतुर्मुख-
प्रमुखैर्युतं प्रलयमानिनाय यः ।
सममुल्लसन् कमलयैव केवलं
परमः स एष हि पुराणपूरुषः ॥ १० ॥

त्रिगुणाकृतिप्रकृतितो गुरुं तत-
स्त्रिविधामहङ्कृतिममर्त्यखान्यतः ।
अपि भूतपञ्चकमितोऽण्डमण्डलं
भगवानसाविह जगन्ति चासृजत् ॥ ११ ॥

विधिवायुवीन्द्रशिवकौशिकेशका-
नमरामरानुगनरासुरादिकान् ।
सृजति प्रपालयति हन्ति सन्ततं
स्वगतिं प्रयापयति चैष लीलया ॥ १२ ॥

अगणय्यसद्गुणगणो विदूषणः
स्ववशाखिलोऽप्यनुपाचारतः स्वयम् ।
स्मृतिकीर्तनप्रणतिभिर्विमुक्तये
स्वजनस्य यात्ययमनेकरूपताम् ॥ १३ ॥

चतुराननाय चतुरः पुराऽगमान्
प्रददावसावनिमिषेश्वरः प्रभुः ।
विनिहत्य हि श्रुतिमुषं पुरातनं
वपुषोद्धतं हयमुखेन सद्रिपुम् ॥ १४ ॥

अमरेन्द्रवैरिभुजदण्डमण्डल-
प्रतिकर्षपुष्करपतद्धरोद्धृतिः ।
विदधे वराहवपुषाऽमुनोर्मिमत्-
सृतिसिन्धुकच्छपतयाऽऽप्तरक्षिणा ॥ १५ ॥

नरसिंह एष विददार दारुणं
प्रतिघोदयेनखरचक्रतेजसा ।
स्वरिपुं क्षणेन सरसः स्फुरत्तनुं
पृथुसत्त्वमिष्टजनभीतिभञ्जनः ॥ १६ ॥

अपि वामनो ललितबाल्यवानयं
प्रतिभाबलेन कृतदैत्यकौतुकः ।
उपधेरधःकृतबलीन्द्रशात्रवः
स्वजनाय केवलमदात् परं पदम् ॥ १७ ॥

कथयन्त्यमुं परशुभासमानगो-
हतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं
गुरुशक्तितापसवरान्वयोद्भवम् ॥ १८ ॥

करुणाकरः स वसुदेवमोददो
भगवान् पुराहिमकरान्वयेऽभवत् ।
जितवान् दिशो दशरथोऽग्र्यसम्पदो
जनको बभूव भुवि यस्य वैरिहा ॥ १९ ॥

भुजगेश्वरोऽपि भुवनेश्वरप्रियः
समजन्यथारिदरजन्म भुव्यभूत् ।
तममुष्य कान्तिविजितेन्दुमग्रजं
रमणीयमाहुरिह रामनामकम् ॥ २० ॥

जनकेन सोऽथ विरहासहिष्णुना
मुहुरीक्षितो वनमनीयत प्रभुः ।
चकितेन दुष्टजनतस्तपस्विना
तत आसुरीं निशिचरीं जघान सः ॥२१ ॥

मुनिसप्ततन्तुकृतवैरिबन्धनं
कटुकेश्यरिष्टपदमुख्यदुर्जनम् ।
क्षपयन्तमुद्यतसुबाहुमाहवे
तमथाभ्यनन्ददमरादिसद्गणः ॥ २२ ॥

सवने विकस्वरगुणस्वरद्विजे
स्फुरिते चरन् सकलगोकुलप्रियः ।
इतकामतापसरसार्द्रधीगिरः
प्रतिलाळयन्नरमतैष सुन्दरीः ॥ २३ ॥

सहजान्वितः सकलमित्रसंयुतो
मधुरां पुरीं जनकवल्लभां गतः ।
प्रविशन्निमां स जगदेकसुन्दरो
नरनार्युदारनयनोत्सवोऽभवत् ॥ २४ ॥

अथ खण्डितेश्वरधनुः स लीलया
क्षपितोग्रसेननृपपुत्रपौरुषः ।
समुपास्य विप्रगुरुमब्जभूगुरुः
स्वजनानमोदयदमेयतेजसा ॥ २५ ॥

कमलामयं कमलपत्रलोचनां
भुवमागतां नृपसुतां गृहीतवान् ।
निजलीलया विजितराजशात्रवो
मुदमापदाप्य पुरमब्धिदुर्गमम् ॥ २६ ॥

स जगाम मातृजनतुष्टये किल
त्वरितोवनं विदधदीप्सितं सताम् ।
सह भार्ययाऽपि शुभया महाजय-
ध्वजलक्ष्मणाग्र्यसुहृदा विनामुदा ॥ २७ ॥

समतीतपर्वतपुरोगदुर्गमः
खरदूषणादिसुजनद्विषो बहून् ।
स निहत्य विश्वभयदं सुदुस्सहं
नरकं महातम उतानयत् क्रमात् ॥ २८ ॥

रुचिराश्रमाजिरचिताग्र्यतेजसा
प्रियया प्रियो भुवनमान्यया समम् ।
भृशमाकुलीकृतमदप्रमादवत्-
सुरपारिजातहृदवाप धाम सः ॥ २९ ॥

हरितामधीशनरदेवमण्डलं
दशकं विजित्य परभीषणं मुहुः ।
स्फुरितामिह प्रियतमां निजश्रियं
भगवानुपैक्षत हरन्तमप्रियम् ॥ ३० ॥

अभिनन्दितः पवननन्दनादिभिः
स कदाचिदिन्द्रसुतवर्धको गवा ।
निजराज्यमात्मदयिताय दत्तवान्
हरिसूनवे हतविपक्षमुत्तमम् ॥ ३१ ॥

मुदमाप्य तत्र दयितोरुवार्तया
मधुहा मरुत्सुतमुखप्रवृत्तया ।
हरितिग्मचक्रलसितोऽब्धिमध्यगं
प्रययौ स पुण्यजनसेवितं पुरम् ॥ ३२ ॥

पृथुकुम्भकर्णगजराजमुद्धतं
ससहोदरं सविबुधेन्द्रशात्रवम् ।
धरणीभरं पृथुलचक्रमक्षिणो-
न्निशितेषुचक्रकृतविक्रमः प्रभुः ॥ ३३ ॥

अथ भार्यया हुतवहं प्रविष्टया
सहितः सहोदरपुरस्सरैरपि ।
अयमाप्य धाम चिरमिष्टदः सतां
निजमूलरूपपरमैक्यमेयिवान् ॥ ३४ ॥

महिदासपूज्यचरणो द्विजादभूत्
विदितात् स विष्णुयशसोऽमलात्मनः ।
इह यो दधे जगति पापशान्तये
बहुधामहेतिमतिदीप्तगोस्थितिम् ॥ ३५ ॥

सुतपोरुचेरयमपापकर्दमा-
न्ननु मानवीतनयतामुपेयिवान् ।
समयेन भूरिनिजभक्तिपूरितान्
समजीजनत् सुमनसः स देवराट् ॥ ३६ ॥

सुबृहत्पयोधरमिथःप्रसंहति-
प्रकटीभवत्परमयौवनाकृतिः ।
असुराहितां वरविलासिनी तनुः
प्रददावमुष्य सुरराशये सुधाम् ॥ ३७ ॥

सुजनाय दत्तपद आत्मशुद्धिदः
सुकुमाररूप्यभवदेष शाश्वतः ।
अनसूयया शुचिमनीषया धृतः
परमादरेण मुनिपुङ्गवोढया ॥ ३८ ॥

दयितः सतामृषभ एष भूधरो
वपुरुद्वहन् परमहंसलक्षणम् ।
व्यहरद् वलक्षतमपक्षशोभनं
परतत्वलिप्सुसनकादिवन्दितः ॥ ३९ ॥

उदपादि धर्मतनयो ह्ययं हरि-
र्नरदेवसोदर उदारविक्रमः ।
अपि कृष्ण इत्यभिहितो मुदे सतां
स्वयमेव यस्य सहजो व्यजायत ॥ ४० ॥

परमात्मने सततमेकरूपिणे
दशरूपिणे शतसहस्ररूपिणे ।
अविकारिणे स्फुटमनन्तरूपिणे
सुखचित्समस्ततनवे नमोनमः ॥ ४१ ॥

इति चिन्तयन्नविरलान्तरो हरिं
प्रणनाम सप्रणयमादृतोऽमुना ।
अजितौ परस्परसभाजितौ स तौ
निकषा निषीदति पुरोपवेशिनौ ॥ ४२ ॥

विविधा विधाय किल तत्र सङ्कथा
वदनं मुनीन्द्रतनयस्य सुन्दरम् ।
अवलोक्य लोकपतिरानतं महा-
सुखतीर्थमाह रहसि स्म गामिमाम् ॥ ४३ ॥

शृणु देवकार्यमवधार्य धैर्यवद्
यदुदीर्यमाणमिदमार्यसम्मतम् ।
भविताऽन्यदुष्करतरं विधाय तत्
तरुणं तवावतरणं महाफलम् ॥ ४४ ॥

अपिधाय सूत्रहृदयं सतां प्रियं
प्रविधाय भाष्यमधुना निजेच्छया ।
अपरैः श्रुतिस्मृतिनिजार्थदूषकैः
सुतरां तिरोभवति संविदाहता ॥ ४५ ॥

अपनेतुमेनमनयं कृतं खलैः
प्रतिनेतुमात्मजनतां शुभां गतिम् ।
कुरु सूत्रभाष्यमविलम्बितं व्रजेः
सुमतेन योजय कवे श्रुतिस्मृतीः ॥ ४६ ॥

अमितां मितामपि गिरं जगद्गुरो-
रिति तां निशम्य विरलेतरान्तरः ।
वदतां वरस्तमवदत् तदा तयो-
र्विरहाक्षमः खलु चराचरेशयोः ॥ ४७ ॥

भवतोरितः सततसेवनामृते
मम मङ्क्तुमस्तु भगवन्ननुग्रहः ।
न लभेय वल्लभतमेदृशं सुखं
जगतां त्रयेऽपि जगदेकमङ्गलम् ॥ ४८ ॥

कलिकालकालितगुणे धरातळे
सुजनो न नूनमधुनाऽस्ति योग्यधीः ।
परतत्ववर्णनमयोग्यतावते
ननु हव्यदानमिव निन्द्यते शुने ॥ ४९ ॥

इति तं ब्रुवाणमयमब्रवीद् विभु-
र्भुवि सन्ति सौम्य पुरुषा गुणोचिताः ।
विमलान् मणीनिव गुणोज्झितानिमान्
दयया विशोधय विशुद्धगोगणैः ॥ ५० ॥

तव कीर्तिरार्तिमतिमात्रमानये-
दशुभान् प्रभाकरनिभेव कौशिकान् ।
कमलाकरानिव शुभान् प्रबोधयेत्
परमाज्ञया मम विशेषतोऽनिशम् ॥ ५१ ॥

इति सा महीधरमुखाद् विनिःसृता
जगतां सुखाय विशदा सरस्वती ।
द्विजराजगोविषयतातिपूरितं
प्रविवेश मध्वपृथुबुद्धिवारिधिम् ॥ ५२ ॥

मतमित्यवेत्य महितं महतो-
रभिधाय बाढमिति धीरमतिः ।
अनयोर्नियोगमधिरोपितवान्
स्वशिरस्यनन्यसुवहं प्रणमन् ॥ ५३ ॥

आम्नायास्त्रय इव तत्वबोधकास्ते
पापघ्नास्त्रय इव पावकाः प्रजानाम् ।
लोका वा सकलभृतस्त्रयोऽत्र रेजुः
सानन्दा मुनिसुतधर्मसूनुमध्वाः ॥ ५४ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते अष्टमः सर्गः ॥

# नवमः सर्गः

चोदयन्तमथ गन्तुमादरात्
तत्र धर्मजमजं प्रणम्य सः ।
सौख्यतीर्थकविलोकनायको
वेदनायकपुरस्सरो ययौ ॥ १ ॥

आश्रमान्तरमवाप्य कृष्णतः
श्राव्यमेष सकलं च शुश्रुवान् ।
चित्तवृत्तिमनुवृत्तिमान् गुरोः
साध्ववेत्य गमनोन्मुखोऽभवत् ॥ २ ॥

मन्दहासमृदुसुन्दराननं
वन्दनीयमभिवन्द्य सत्पतिम् ।
प्राज्ञमौलिमणिरभ्यनुज्ञया
तस्य तावदगमन्महामतिः ॥ ३ ॥

तस्य वल्लभतमाऽऽस वासभू-
र्मानसात् पृथुलमानसस्य नो ।
नात्यजत् क्षणमपि ह्यसाविदं
नैष नाथविरही ततोऽभवत् ॥ ४ ॥

वीरदृष्टिकृतसिंहविभ्रमः
शान्तदृष्टिकृतशान्तसम्मदः ।
तत्रतत्र पथि पथ्यविभ्रमः
पर्वतादवततार सर्वधीः ॥ ५ ॥

वानरेन्द्र इव तीर्णवारिधि-
र्वासुदेव इव रत्नराजवान् ।
भीमसेन इव सूनवर्यहृ-
न्निर्वृतिं स्वजनमानिनाय सः ॥ ६ ॥

अग्निशर्ममुखपञ्चषैर्द्विजै-
रन्नमाहृतमलं पृथक् समम् ।
कृत्स्नमाददयमित्यविस्मयः
कृत्स्नमत्तुमलमेष हि क्षये ॥ ७ ॥

व्यासदेवहृदयातिवल्लभं
वासुदेवमगणय्यसद्गुणम् ।
साधयत् सकलदोषवर्जितं
ज्ञानभक्तिदमनन्तसौख्यदम् ॥ ८ ॥

उक्तमुक्तमभिधेयमुत्तमं
वेदवाक्यमनुवादयन् मुहुः ।
व्यञ्जयत् स्मृतिवचोभिरञ्जसा
तस्य चार्थमतियुक्तयुक्तिमत् ॥ ९ ॥

बालसङ्घमपि बोधयद् भृशं
दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रसादवत्
सौम्यकान्ति च विपक्षभीषणम् ॥ १० ॥

अस्तदूषणमवन्ध्यभाषणं
लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकैः
रूपमन्यदिव धन्यमात्मनः ॥ ११ ॥

एकविंशतिकुभाष्यदूषकं
ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदूष्यमतनोदनन्तधी-
र्भूतभाविभवदात्मभिः क्वचित् ॥ १२ ॥

गाङ्गमङ्गलतरङ्गभङ्गद-
प्रान्तसुश्रिहरिवेश्मकृत्समः ।
यद्गतैकतमवर्णलेखकः
सत्यतीर्थ इह भाष्यमालिखत् ॥ १३ ॥

तत्र देवमभिवन्द्य यातवान्
स्वामिनो वचनगौरवाद् द्रुतम् ।
सानुगो विविधभूरतीत्य गो-
दावरीतटमगादलेशधीः ॥ १४ ॥

प्राज्ञवित्तमयमाप्तुमागतै-
र्पण्डितैर्द्विनवशाखिभिः श्रुतीः ।
प्रस्तुता अभिदधौ परीक्षकैः
षट् च तत्र समयानखण्डयत् ॥ १५ ॥

ते पृथक्पृथगमुं स्वशाखया
दर्शनेन च परीक्ष्य निर्जिताः ।
सर्ववित् त्वमसि मुख्यतः कवे
नास्ति ते सदृश इत्यथाब्रुवन् ॥ १६ ॥

यस्त्रयीसकलपक्षशिक्षक-
स्तत्र संसदि वरिष्ठसम्मतः ।
शोभनोपपदभट्टनामकः
पूर्णसङ्घ्यमनमन्मुहुर्मुदा ॥ १७ ॥

यस्तु तार्किकशिखामणिः सुधी-
र्वर्तमानसमयान् निराकरोत् ।
वेदभारतपुराणनिष्ठितो
भाष्यमेतदशृणोत् स मध्वतः ॥ १८ ॥

नापरेषु रतिमाययौ क्वचिद्
भाष्यमद्भुतमिदं स शुश्रुवान् ।
नारविन्दमकरन्दमाप्तवा-
नच्छपिच्छ इव वाञ्छतीतरत् ॥ १९ ॥

तत्रतत्र स सभासु भासुरो
नन्दितीर्थसमयोक्तयुक्तिभिः ।
वादिनो विशकलय्य तान् समा-
क्रम्य वाचमुचितामुदाहरत् ॥ २० ॥

चूर्णकृद् विविधशङ्खचूर्णक-
श्चूर्णनाय बहुधाप्यशक्नुवन् ।
अत्यजद् विफलधीः प्रदक्षिणा-
वर्तवारिजमनर्घमप्यहो ॥ २१ ॥

अप्रमेयमतिशास्त्रमीदृशं
यस्त्यजत्युपनतं सुदुर्लभम् ।
तस्य तुल्यमतिरेष दुर्जनो
नाथवाऽस्य सदृशोऽस्ति नीचधीः ॥ २२ ॥

कोऽपि तं गुणविशेषविच्च वि-
क्रीय भूरि धनमाप पूरुषः ।
न ह्यनर्घगुणमूल्यमाप्यते
भाग्यदैवमिह योग्यतानुगम् ॥ २३ ॥

व्यक्तमुन्नतिमितोऽप्ययं जन-
स्तस्य यन्न लभतेऽखिलं फलम् ।
स्तोकमानसतया ततो व्रजेत्
तस्य हन्त पुरुषस्य तुल्यताम् ॥ २४ ॥

क्रीतवान् नरपतिर्महादरं
सादरं पुनरुदारचेष्टितः ।
अर्चयन् सततमाप सम्पदो
या न ता वचनचित्तगोचराः ॥ २५ ॥

शास्त्रकल्पकतरोरमुष्य कः
प्राप्नुयात् सकलमप्यहो फलम् ।
यस्तमुत्तमगुणं विडम्बये-
दित्युदीर्य स जनानरञ्जयत् ॥ २६ ॥

नेदृशैः कविभिरेव केवलं
हन्त पूज्यचरणोऽभ्यपूज्यत ।
शर्वशक्रगुरुपूर्वदैवतै-
रप्यलं सुसमयोद्गमोत्सवे ॥ २७ ॥

निम्नभूरिव सतीः प्रजा व्रजन्
वारिदर्तुरशनैरपूरि सः ।
प्राज्यतापहरदर्शनाम्बुना
तुङ्गदेशमिव दुर्जनं तु नो ॥ २८ ॥

कर्मभिः सकललोककौतुकै-
र्मानितः पथि जनैः समागतः ।
सन्ननाम शिवनामकीर्तनं
राजतासनपुरे विराजितम् ॥ २९ ॥

अच्युतप्रमतिरच्युतप्रियं
तं दशप्रमतिमागतं तदा ।
वन्दमानमवलोक्य यां मुदं
प्राप्तवांस्तदवधिर्न विद्यते ॥ ३० ॥

प्रीतिमार्ययतिरुत्तमां पुरा
प्रेषिताप्रतिमभाष्यदृग् ययौ ।
अप्यतोऽतिशयिनीं शुचिस्मितं
तं विलोक्य सुचिराद् दिदृक्षितम् ॥ ३१ ॥

पूर्णदृष्टिजलधेर्गृहीतवान्
भाष्यसञ्ज्ञममृतं सुखावहम् ।
चित्रमेष यतिराड्घनाघनो
ग्राहयंश्च मनुजान् मुमोच नो ॥ ३२ ॥

सानुनीतिरथ नीतिमानयं
भाष्यसद्गुणगणानवर्णयत् ।
शोभनाय गुरवे स्वभावतः
कालतः कुमतलीनबुद्धये ॥ ३३ ॥

उक्तिभिस्तमसकृत् सुयुक्तिभि-
र्बोधयन् बहळधीः प्रसङ्गतः ।
स्थेयसो भिषगिवास्य हृद्गतं
मूलदोषमरुचेरचिन्तयत् ॥ ३४ ॥

दक्षपक्षविहृतेन ताडयन्
भीषयन् समधिकस्वरश्रिया ।
हंसराट् कलिमलं निराकरो-
देकदृष्टिमिव मानसाद् गुरोः ॥ ३५ ॥

निष्कळङ्कमिव चन्द्रमण्डलं
पुण्डरीकमिव फुल्लतां गतम् ।
वारि शारदमिव प्रसादव-
च्चित्तमच्युतमतेर्भृशं बभौ ॥ ३६ ॥

आननन्द स हि मध्वशास्त्र-
माकर्णयन् कुसमयाग्रही पुरा ।
मोहपीतलवणोदको मुहुः
प्राक् पिपासुरमृतं पिबन्निव ॥ ३७ ॥

विस्तृतान्तरवियत्पदौ यती
अस्यतां सुसमयप्रकाशनात् ।
तौ यथा विधुरवी अहो अहो-
रात्रमप्युरुतमो नृमोहकम् ॥ ३८ ॥

सज्जनान् सह महादरेण नॄन्
पापिनां प्रकृतितोऽप्रियाकृति ।
दारुणाघगणदारणं स्म स
ग्राहयत्यपि सुदर्शनद्वयम् ॥ ३९ ॥

नन्वनन्यशरणात्मनां सतां
सिद्धिविघ्नमुखदोषभेषजम् ।
ऐच्छदच्छलदयोदयादयं
रूप्यपीठपुरगः कदाचन ॥ ४० ॥

गोपिकाप्रणयिनः श्रियःपते-
राकृतिं दशमतिः शिलामयीम् ।
शिष्यकैस्त्रिचतुरैर्जलाशये
शोधयन्निह ततो व्यगाहयत् ॥ ४१ ॥

स्पर्शनाद् भगवतोऽतिपावनात्
सन्निधानपदतां गतां हरेः ।
त्रिंशदुद्यतनरैः सुदुर्धरां
लीलयाऽनयदिमामसौ मठम् ॥ ४२ ॥

मन्दहासमृदुसुन्दराननं
नन्दनन्दनमतीन्द्रियाकृतिम् ।
सुन्दरं स इह सन्न्यधापयद्
वन्द्यमाकृतिशुचिप्रतिष्ठया ॥ ४३ ॥

मानिनोऽपि हि वशीचकार यो
दैवतप्रतिभयाऽऽत्मनः खलः ।
यायजूकगुणमात्मनः स्मरन्
यो जराघटितगोत्र उच्यते ॥ ४४ ॥

आत्मनः प्रियतमक्रतोरमुं
पापपूरुषमवेत्य घातकम् ।
तं निरस्य जनमप्यथाहितं
सर्वभूधरसमर्थपूर्वकम् ॥ ४५ ॥

विश्वविस्मयकरः स्वतेजसा
वन्द्यमानचरणः पुनर्जनैः ।
चित्रदिग्विजयकीर्त्यकीर्तिमान्
मोदयन्ननुदिनं निजाः प्रजाः ॥ ४६ ॥

वासुदेवदयितो महिष्ठधी-
र्वासुदेवमथ साध्वयाजयत् ।
धर्मसूनुमिव धार्मिकं पुरा
भीममूर्तिरयमेव भूसुरम् ॥ ४७ ॥

याज्यया समुचितानुवाक्यया
सप्रवर्ग्यविभवैरभिष्टवैः ।
विश्ववेत्तुरनुजोऽत्र होतृतां
प्राप्य दैवततततीरतोषयत् ॥ ४८ ॥

स प्रयुज्य निशिता निशातधी-
वैश्वदेववरशस्त्रसन्ततीः ।
राक्षसासुरनिरासकृत्सुरान्
वीरवर्य इव भागमापयत् ॥ ४९ ॥

वायुना त्रिरपि पूर्वपायिना
सर्वदैवतजिता तरस्विना ।
योऽपरोक्षवपुषाऽप्यपेक्षितः
कोऽत्र वर्णयति तं महाक्रतुम् ॥ ५० ॥

ब्रह्मवेदननिविष्टचेतसां
कर्म तत्र करणान्तरं भवेत् ।
ज्ञापयन्निति परात्मवेदकः
कर्म धर्ममपि स ह्यचीकरत् ॥ ५१ ॥

यानियानि चरितानि यानिया-
नीरितानि च मनोहराण्यहो ।
तानितानि च वितानिचेतसो
विश्वविस्मयकराणि भान्ति हि ॥ ५२ ॥

सरस्वतीर्वृत्तिकरीः शरीरिणा-
मतीत्य बह्वीः समतीतगोत्रकः ।
पुरेव कृष्णप्रियमापदश्रमं
पृथुप्रबोधः पुनरुत्तमाश्रमम् ॥ ५३ ॥

सहभोगमनन्यलभ्यमस्मै
हनुमद्रूपवते ददौ पुरा हि ।
अनवेक्ष्य परं स्वभीष्टकर्त्रे
प्रतिदातुं हरिरैधयत् तमेव ॥ ५४ ॥

प्रणम्य गुरुमादरादथ नियोगतो योग्यतः
स तस्य जगतां हितं विदधतो गतः सानुगः ।
महिष्ठहृदयो महामहिमसिन्धुरानन्दतो
निजैरभिगतोऽनमद्रजतपीठवासं हरिम् ॥ ५५ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते नवमः सर्गः

# दशामः सर्गः

सपदि समस्कुरुत भृशं
माधवगुणसाधकोऽथ मध्वरविः ।
भृगुकुलतिलकस्थानं
तापकरः पापपान्थानाम् ॥ १ ॥

दशमतिशिष्यः कश्चि-
च्छुभजनतायै कुतूहलनतायै ।
विविधसुवृत्तं वाक्यं
काव्यमिवोचे सनायकस्तवकम् ॥ २ ॥

भुवनाद्भुतमध्वचेष्टितं
न वदेमापि सुरायुषा वयम् ।
सकलं खलु किन्तु किञ्चिद-
प्यथ शुश्रूषुजनाय वर्ण्यते ॥ ३ ॥

क्वचिदीश्वरदेवमेष भूपं
खननं पान्थजनं विधापयन्तम् ।
स्वमपि प्रतिचोदयन्तमूचे
क्रियया नोऽकुशलान् प्रबोधयेति ॥ ४ ॥

प्रकारं प्रकटीकर्तुमारभ्य विरराम नो ।
महीयोमतिमाहात्म्याद् वैवश्येन खनन् खलः ॥ ५ ॥

नानेनेनानेनानेनोनूनेन ननु नुन्नाः ।
नानाना नो नूनं नानेनानूननाऽनुन्नः ॥ ६ ॥

यमशेषभवप्रभवः स्मरता-
मसुखाब्धिरपैति न चित्रमिदम् ।
मरुतीदृशि भान्ति हि यत्स्तवने
यमशेषभवप्रभवः स्म रताः ॥ ७ ॥

सञ्चरन्नञ्चनीयः कदाचिद् विभु-
र्विष्णुपद्यास्तटं वैष्णवाग्रेसरः ।
प्रापदाप्तैर्निजैरेष शिष्यैर्वृत-
स्त्यक्तविश्वप्लवं शात्रवातङ्कतः ॥ ८ ॥

इमान् स्वस्वपूर्वाश्रयानात्मवाक्यात्
सलीलं दयालुः स मूलाश्रयात्मा ।
निषेद्धूननादृत्य चानन्यलङ्घ्यां
तदाऽत्यायत् तां नदीं संसृतिं वा ॥ ९ ॥

वारयतवारयत वैरिसुहृदोऽमून्
मारयतमारयत पारगमनात् प्राक् ।
आपतत आलपत इत्यवददुच्चैः
स त्वरकराजपुरुषानुचितवाचा ॥ १० ॥

न जडा जले पतत साहसादहो
न भयं हि वो बहुतयाऽबहोर्जनात् ।
भवतां पतिं क्षितिपतिं दिदृक्षवः
प्रतियाम केन कलहं चिकीर्षथ ॥ ११ ॥

वचसेत्यनेन स परान् न्यरुणद्
भुजगान् नरेन्द्र इव मन्त्रबलात् ।
उदतारयत् परिजनं मृतिभी-
सरितश्च देवसरितश्च समम् ॥ १२ ॥

निर्विकारचरितोऽपि परीतः
क्रूरकिङ्करसहस्रतयेन ।
स व्रजन्नुदलसज्जगदीशः
सिंहराडिव सृगालसमूहे ॥ १३ ॥

अप्रकम्प्यवपुषं सुरासुरैः
सिंहसंहननमेनमुन्नतम् ।
प्राप्तमात्मनगरान्तिकं नृपः
प्रेक्ष्य सौधशिखरे स्थितोऽब्रवीत् ॥ १४ ॥

रिपुनृपप्रणिधिप्रतिशङ्कया
पथिकपाटनकर्मणि दीक्षितैः ।
सुमुख मे पुरुषैः परुषैः कथं
यमभटैरिव नासि विहिंसितः ॥ १५ ॥

अप्लवदेवनदीतरणं ते
हन्त कथं च चिकीर्षसि किं त्वम् ।
तं निगदन्तमितिप्रभृतीह
स्माह महापुरुषोत्तमदासः ॥ १६ ॥

योऽसौ देवो विश्वदीपः प्रदीप्तः
कुर्मः सर्वं तत्परानुग्रहेण ।
यामस्तावत् तूर्णमाशामुदीची-
मित्याद्यं तद्भाषया चित्रवाक्यम् ॥ १७ ॥

गाम्भीर्यं धृतिमुरुवीर्यमार्यभावं
तेजोऽग्र्यं गिरमपि देशकालयुक्ताम् ।
राजाऽस्य स्फुटमुपलभ्य विस्मितोऽस्मै
राज्यार्धं सपदि समर्पयाम्बभूव ॥ १८ ॥

दण्डार्हबुद्धिविषयो नृपपूरुषाणां
राज्यार्हबुद्धिविषयोऽभवदित्थमेषः ।
नीतिं प्रकाशयितुमेव विपत्सु कार्यां
गन्तुं प्रभुः प्रसभतोऽपि तथा व्यधात् सः ॥ १९ ॥

कदाचिच्चोराणां निकरमवलोक्याभिपतता-
मवस्थाप्य स्वीयान् करगपटपिण्डार्थमतिकृत् ।
चरन्नेतेष्वेतानथ मिथ इहाघातयदहो
विभुः सम्मोह्य प्राग् विजय इव संशप्तकगणान् ॥ २० ॥

अन्यत्र च चोरान् धन्यप्रवरोऽसौ
शूरान् शतसङ्ख्यान् प्राप्तान् स्वजिघांसून् ।
एकेन तु शिष्येणाकृष्टकुठारान्
निस्ताडितयूथ्यानद्रावयत द्राक् ॥ २१ ॥

क्वचिच्छिलाच्छटाभ्रमादमुं ससङ्घमत्यजन् ।
अवेक्ष्य दस्यवः पुनः कुतूहलात् तमानमन् ॥ २२ ॥

सत्योच्छेदे सेच्छापातं व्याघ्राकारं दैत्यव्याघ्रम् ।
प्राळेयाद्रेः प्रान्ते प्राज्ञः पाणेर्लीलालेशेनाऽस्यत् ॥ २३ ॥

प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः ।
यासु स पद्मासहितो दोष्यहितः सन्निहितः ॥ २४ ॥

पाराशर्यः परतत्वप्रसिद्ध्यै
तात्पर्यार्थं परमं भारतस्य ।
व्यक्तं वक्तुं नियुनक्ति स्म साक्षा-
देनं धन्यं भुवने मन्यमानः ॥ २५ ॥

तीर्थेषु तीर्थेषु च सौख्यतीर्थः
क्षेत्रेषु च क्षेत्रविदां वरिष्ठः ।
गोविन्दमावन्द्य सहानुगोऽगाद्
गङ्गां पुनस्तुङ्गतरङ्गमालाम् ॥ २६ ॥

प्लवैरपेतामवलोक्य सिन्धुं
सरोजबन्धुं च तदाऽऽप्तसिन्धुम् ।
तटे निषण्णानधिकं विषण्णा-
न्निरीक्ष्य शिष्यानतरत् स एताम् ॥ २७ ॥

न वानरेन्द्रस्य विलङ्घिताब्धे-
र्न वा नरेन्द्रस्य विहर्तुरस्याम् ।
इमेऽस्मरंस्तद्वपुषोऽन्यथाऽस्य
शक्तस्य शङ्क्येत विपत् कथं तैः ॥ २८ ॥

जगत्प्रदीपायितगोगणाढ्ये
दिवाकरे मध्वदिवाकरे च ।
अव्यक्तरूपे श्रियमत्यजन् द्राक्
सहाम्बुजैस्तन्नयनाम्बुजानि ॥ २९ ॥

पदं पशोर्वा विनतातनूज-
स्तीर्त्वा नदीं तावददीनसत्त्वः ।
अनार्द्रवासाः स कुतूहलार्द्रै-
र्नृदेवभूदेवमुखैर्ववन्दे ॥ ३० ॥

भीतैररातेरतिमात्रमत्र
नतारकैरप्यथ तारकैः सः ।
स्वतेजसा विस्मितभूपनुन्नैः
प्लवेन शिष्यान् निरतारयत्ताम् ॥ ३१ ॥

विशङ्कटं स्वस्तटिनीतटं ते
दीपप्रदीप्तं जनताभिपूर्णम् ।
सश्वोदयत्पण्डितमण्डलाढ्यं
नाथावलोकोत्कहृदोऽभ्यपश्यन् ॥ ३२ ॥

आम्नायमाम्नायविदां विदग्धं
सभावभेदं प्रवदन्तमत्र ।
दैव्यां सभायामिव पद्मयोनिं
प्रैक्षन्त साक्षात् सुखतीर्थमेते ॥ ३३ ॥

प्राप्तस्ततो हस्तिनराजधानीं
मासानुवासेह स वासयोग्यान् ।
मठान्तरेऽनन्तगुणान्तरः स-
न्नेकान्तदेशे सरितोऽसमीपे ॥ ३४ ॥

भित्त्वा भुवं देवनदी जगाम
शाखाविशेषेण निषेवितुं तम् ।
वाणी च यत्प्रेष्यतया कृतार्था
शिवादिवन्द्या न तदत्र चित्रम् ॥ ३५ ॥

गुरुप्रबर्हस्य पदारविन्दं
विदूरतः सा प्रणनाम मूर्ता ।
औदार्यसौन्दर्यतनुं तनुं ता-
मालक्ष्य शिष्यैरतिविस्मितं तैः ॥ ३६ ॥

तेनोपयातेन कदाचनाथ
वाराणसीं पापनिवारणेन ।
अवादि वाणी बलिनः स्वशिष्यान्
विलोक्य लीलावसरेऽवलिप्तान् ॥ ३७ ॥

नियुद्धसिद्ध्यै युगपद्धि वीर-
म्मन्या भवन्तोऽभिपतन्तु मां द्राक् ।
समस्तशक्तिं न युनक्ति यः स्वा-
मत्रास्मदाज्ञां स निराकरोति ॥ ३८ ॥

इतीरयन् पञ्चदशैष यूनः
प्राप्तान् प्रयुद्धान् युगपन्निपात्य ।
उत्थीयतां यस्य समर्थता स्या-
दिति ब्रुवाणः शनकैर्जहास ॥ ३९ ॥

सौमेरवं गौरवमावहन्ति
तवाङ्गमङ्गाङ्गुलयश्च नोऽङ्गे ।
पुरा विनश्याम इतो दयालो
स्वामिन् विमुञ्चेत्यवदंस्तदा ते ॥ ४० ॥

तेनाथ मुक्तैरतिविस्मयस्तै-
रवाप्यनालोच्य हि तत्स्वरूपम् ।
यद्भ्रूविजृम्भेण सशम्भुशक्रं
जगत्समस्तं नियतं निकामम् ॥ ४१ ॥

सदाक्ष्यमाक्षिप्तसमस्तपक्षको
यतिः प्रभुं कोऽप्यमरावतीपदः ।
जिगीषया ज्ञानसहायकर्मणः
प्रसाध्यतां साधनतेत्युदाहरत् ॥ ४२॥

संसाधितार्थे भगवत्ययुक्तिवित्
पप्रच्छ स ज्ञानपदार्थमुग्रधीः ।
ज्ञातः स ते ज्ञान्यसि चेन्न चेन्न स
प्रश्नो घटेतेति निराकृतैष तम् ॥ ४३ ॥

विततततमतमोन्तं साधयन्त्या नितान्तं
सदसिसदसि रेजे व्याख्यया व्यासशिष्यः ।
सकलसमयिहस्ताम्भोजबन्धाभिनन्दी
शरदिशरदि चन्द्रश्चन्द्रिकासम्पदेव ॥ ४४ ॥

जननं समये समये जगतः
प्रथिते समये समयेदमिते ।
सनिरासमयेऽसमये स्थितियुक्
स्ववभासमयेऽसमयेष्टधिया ॥ ४५ ॥

वर्तस्वाध्यधि सर्वं
दीव्येदं सोऽनिशं स्वतन्त्रो विष्णुः ।
उज्जासय दुष्टानां
संस्कुरु साधून् गुणाभिपूर्णोऽप्यगुणः ॥ ४६ ॥

असमोत्तमो मतोऽसौ
श्रियःपतिर्विश्वतो विभिन्नात्मा ।
परमान् प्रकाममर्थान्
प्रकाशयामास सेत्यादीन् ॥ ४७ ॥

समानया याऽनमाऽस मायया ततयाऽयमा ।
नयासना नास या न यातनाऽललनातया ॥ ४८ ॥

प्राज्ञो राज्ञां त्रिदिवपदवीं कौरवं क्षेत्रमाप्तः
सस्माराथ स्वविहितिपतद्धस्तियुद्धोत्सवानाम् ।
सत्यात्माद्यैरिह परिवृतो भाविमारीचदृग्भि-
र्विस्मेरैः स्वैर्निजनृपतनूहेतिदृष्ट्याऽतितुष्टैः ॥ ४९ ॥

विप्रात्मेशः क्षणार्थं कृतनतिरशितिश्रीहृषीकेशदेशे
स्पष्टं दृष्टोऽप्यदृष्टः सपदि विहितवान् विस्मयं देहभाजाम् ।

स्वप्ने स्वप्रेरितान्यस्थलगनिजजनरोपाहृतैर्भक्ष्यभोज्यैः
प्राज्यैः प्राभोजयत् स्वं गुरुमखिलगुरुं वेदयन् वेदबन्धुम् ॥ ५० ॥

अवाप्तवान् पुनरिषुपातमस्मरद्
रमापतिं स परशुराममादरात् ।
स राजकेळ्युरुकदळीसहस्रकं
तदाऽऽददत्त्यवसितिदत्तमुत्तमम् ॥ ५१ ॥

स शङ्करपदद्विजोपहृतमाप्य गोवाख्यगां
गरिष्ठकदळीलसद्दशशतीचतुष्कं चरन् ।
पयःकलशपञ्चकत्रिकयुगाभिपूर्णं पपा-
वदृष्टगतिरप्यभूत् नृपनृमण्डलैरुद्यतैः ॥ ५२ ॥

अयमेव गोविषयतोऽपि
सदसि जनतार्थितो जवात् ।
पुष्पमुत फलमहो विदधे
जनसुप्तिदानुपमगानसम्पदा ॥ ५३ ॥

धन्योऽमह्यत नाकिनामहितहृद्वाणस्समोऽजस्य यो
मध्वो ध्वस्तदुरागमोऽव्ययहिमगुश्रीः काममायामिहृत् ।
विष्णुं विश्वजयप्रदं स हि नमन् सेव्यं सुसौख्यं मुदा
दाक्ष्याच्छ्रीधरमामयादिविरही योगी सुहृत् सर्वदा ॥ ५४ ॥

इति भुवनविभूषणस्य भूयां-
स्यविगणितानि कृतान्तराणि हन्त ।
श्रवणमननकीर्तनैरभीष्टं
प्रतिददतीत्यमराः प्रकीर्तयन्ति ॥ ५५ ॥

इति विविधगोधारावारैर्विशारदवारिदो
हरिपदरतो विद्याविद्युत्प्रदीपितदिङ्मुखः ।
भवभयमहाघर्मोत्तप्तं सदङ्घ्रिपमण्डलं
सफलसुमनः सान्द्रानन्दं व्यधादविपल्लवम् ॥ ५६ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते दशमःसर्गः

# एकादशः सर्गः

प्रचुरान्तरप्रवचनं फणिराड्
उपशुश्रुवान् ससनकादिमुनिः ।
गगनेऽल्पदृष्टवपुरत्र जनै-
स्त्वरितं निलीनरुचिराप पदम् ॥ १ ॥

अतिचित्रधाम्नि निजधाम्नि रतं
ससहस्रमस्तकमनन्तममुम् ।
मुनयोऽभिवाद्य विनयाभरणा
वरमन्वयुञ्जत तदाऽर्थमिमम् ॥ २ ॥

भगवत्तमस्य विपुलप्रमतेः
समयं मनोहरतमं जगति ।
महितं भवद्भिरपि लोकपते
पठतां मुहुः फलमुदेष्यति किम् ॥ ३ ॥

अधिकारिणां फलमलं विदुषां
भवति प्रवृत्तिरतिवीर्यवती ।
इति तत्फलं सफलसङ्कथनो
भगवान् प्रपञ्चयतु भूरिदयः ॥ ४ ॥

इति तैरुदीरितमुदारमति-
र्वचनं निशम्य स जगाद गिरम् ।
शृणुताऽदरेण महनीयतमं
महनीयपादसमयस्य फलम् ॥ ५ ॥

त्रिदिवादि लभ्यमपि नास्य फलं
कथितं कृषेरिव पलालकुलम् ।
स्वफलं तु मुक्तिपदमुक्तिपदं
शुकशारदादिपरमार्थविदाम् ॥ ६ ॥

परमागमार्थवरशास्त्रमिदं
भजताममानवकलारचितम् ।
व्रजतामहो परमवैष्णवतां
रतये स्वलोकमजितो दिशति ॥ ७ ॥

ननु तत्र विश्वविभवैकपदं
परिभाति पूर्णपुरुषस्य पुरी ।
उपलभ्यते यदुपमानपदं
प्रतिबिम्बमेव मणिवप्रगतम् ॥ ८ ॥

सितसौधसन्ततिरुचा स्फुरिता
परितोऽरुणाश्मगृहपङ्क्तिरुचिः ।
इह मच्छरीरवलये लसिता-
मनुयाति मूर्तिमसुरासुहृतः ॥ ९ ॥

शबळा वळीकघटितस्फटिक-
द्युतिभिर्हरिन्मणिमयी वळभी ।
प्रतिसद्म भाति यमुना मिळिता
सितसौरसैन्धवपयोभिरिव ॥ १० ॥

यदि नाभविष्यदिह विभ्रमता-
नियमो जनस्य निलयावलिषु ।
विकटा विटङ्कृतपत्रिततिः
कृतकेत्यवैक्ष्यत कथञ्चन नो ॥ ११ ॥

विविधस्तुलोपगतचित्रपटी-
सुवितानलम्बिमणिदामगणः ।
शरणान्तरेष्वधिकपूरणतः
प्रचकास्ति विभ्रम इवावगळन् ॥ १२ ॥

विमलाकृतिः प्रकृतिरेव महा-
मणिहेममय्यखिलवस्तुमयी ।
इह सम्भवेत् सकलकान्तिरसः
कथितोऽधिकोक्तिभिरतः कविभिः ॥ १३ ॥

तदनादिकालमितमुक्तिरते-
रगणय्यशम्भुमुखसङ्घततेः ।
नगरैर्महापुरमसंहतिम-
ल्लसति प्रभोरयमहो महिमा ॥ १४ ॥

भवनं विभाति भुवनैकपते-
र्भुवनत्रयाद्भुतगुणातिशयि ।
वरमन्दिरप्रकरमध्यगतं
द्विजमण्डलस्थशशिमण्डलवत् ॥ १५ ॥

स्वयमिन्दिरैव पतिमानकरी
गृहकर्म यत्र कुरुते सुतराम् ।
अपि किङ्करीदशशतीमहिता
श्रियमत्र वर्णयति वेश्मनि कः ॥ १६ ॥

कमलापतिः कमलयाऽमलया
कमनीयया कमललोचनया ।
अमृताहिराजमृदुभोगगतः
स्वरतोऽपि तत्र रमते परमः ॥ १७ ॥

तरुणप्रभाकरसहस्ररुचं
कनकाम्बरं मणिमयाभरणम् ।
हसिताननेन्दुमरविन्ददृशं
तमरीन्द्रधारिणमनुस्मरत ॥ १८ ॥

गणयेद् रमाऽस्य न गुणानखिलान्
चतुराननश्चतुरवागपि नो ।
न वयं सहस्रवदना अपि ता-
नपरोदितानतिवदेम पुनः ॥ १९ ॥

विधयो विहङ्गपतयोऽगणिता
रमणीयुताश्च फणिपेन्द्रमुखाः ।
परयोगभूरिसुखभोगमिता
अवलोक्य तं दधति मोदरसम् ॥ २० ॥

सचतुर्भुजा वनजपत्रदृशो
वरवेषिणोऽत्र सपिशङ्गपटाः ।
अरुणप्रभाश्च तरुणाभ्ररुचो
विचरन्ति नाथरुचयः पुरुषाः ॥ २१ ॥

भगवत्समीपमुपयातवतां
प्रमदो न केवलमलब्धतुलः ।
अपि तस्य लोकमतिलोकगुणं
भजतां सुदुर्लभमभूरिशुभैः ॥ २२ ॥

न भवन्ति यत्र मृतिजन्मजरा-
स्त्रिविधं भयं किमुत दुःखगणः ।
अपरं च किञ्चिदशुभं न भवे-
न्न गुणादि तत्प्रभवमूलमपि ॥ २३ ॥

अनुभूयते सुखमनन्तसखैः
सकलैरलम्मतिपदं सततम् ।
अपि तारतम्यसहितैः स्वगुरु-
प्रवणैः परस्परमुरुप्रणयैः ॥ २४ ॥

अतिसुन्दराः सुरभयः पुरुषा
हरिचन्दनेन नवचन्द्ररुचा ।
चलचारुचामरधरानुचरा
विहरन्ति नित्यतरुणा इह ते ॥ २५ ॥

सविलासलास्यपरितुष्टदृशो
मृदुगीतवाद्यमुदितश्रवणाः ।
अनुरञ्जयन्ति नवकञ्जदृशो
रमणा अमी स्वरमणीस्तरुणीः ॥ २६ ॥

परिणायकानुपवनाभिमुखा-
ननु निस्सरन्ति हरिणीनयनाः ।
विमलाद् विमानवलयाच्छनकैः
शशिमण्डलादिव रुचो रुचिराः ॥ २७ ॥

अरुणाश्मवर्णतनवस्तनवः
शुभहारसन्निभरुचोऽप्यपराः ।
हरिनीलनीलरुचयोऽत्र पराः
प्रकटीभवन्ति विविधाभरणाः ॥ २८ ॥

सुचिरद्युतीर्दधति सूक्ष्मतरं
स्वयमम्बरं च खलु बिभ्रति याः ।
शुकनिःस्वना ध्रुवमिमा अपराः
सुपयोधरा जलधरावलयः ॥ २९ ॥

समतीतविद्रुमभुवां सुदृशां
पदपल्लवाग्र्यनखरक्तरुचीः ।
परभागतः स्फटिककुट्टिमभूः
प्रकटीकरोति न पुरा प्रकटाः ॥ ३० ॥

हरिणीदृशां निवसनानि बृहत्-
सुनितम्बबिम्बरुचिरोरुरुचा ।
शबलद्युतीनि मदनस्य जग-
ज्जयवैजयन्त्य इति निश्चिनुमः ॥ ३१ ॥

करपल्लवैस्तरळितैर्लळितै-
रसकृत् क्वणत्कनककङ्कणकैः ।
नवरोमराजिवलिवल्गुमृदु-
प्रतनूदरैरतिमनाक् तरळैः ॥ ३२ ॥

कुचकुम्भपूर्णतरकान्तिसुधा-
रसशेषबिन्दुविसरच्छविभिः ।
वरहारराजिभिरुतानुपदं
परिलोठिताभिरशनैरुरसि ॥ ३३ ॥

अपि लीलया कुवलयोल्लसितै-
रपरैः करैः सहचरीनिहितैः ।
वदनैः शुचिस्मितकटाक्षरसै-
श्चलकुण्डलोल्लसितगण्डयुगैः ॥ ३४ ॥

प्रगतासु तासु रणितै रशना-
मणिनूपुरैरिव पुरा गदिताः ।
अनुवीक्षितुं तनुविलासमिमं
तरुणा भवन्त्यथ निवृत्तमुखाः ॥ ३५ ॥

अनुपालिताः स्वदयितैर्दयिताः
कथमप्युपेत्य कुचभारनताः ।
शनकैः पुनस्तदवलम्बबलात्
किल ता विशन्ति परमोपवनम् ॥ ३६ ॥

हसितप्रसूननिकरोरुभर-
प्रणमत्सुवर्णमणिसर्वतरून् ।
उपगूहयन्नमृतसिन्धुसखः
पवनो न कस्य सुखमेधयति ॥ ३७ ॥

वरपारिभद्रकसुकल्पतरु-
व्रजपारिजातहरिचन्दनवत् ।
सहितं समादिपदताननगैः
परिभूषयन्ति तदहो ऋतवः ॥ ३८ ॥

स्मितमाधवीकुसुमरम्यतरौ
नवचम्पकादिकुसुमोल्लसितौ ।
मधुमाधवौ मधुपगीर्मधुरौ
मधुजित्प्रियान् प्रमदमानयतः ॥ ३९ ॥

नवमल्लिकास्रजमभीष्टतमः
शुचिसम्भवां प्रणयिनीशिरसि ।
कलयन् स्वयं न कुशलेति किल
प्रतिघट्टयत्युरुकुचावुरसा ॥ ४० ॥

मधुरस्वरास्ततपतत्रतति-
प्रकटान्तपङ्क्तिधृतनेत्ररुचः ।
शिखिनोऽनुयान्ति हि सहस्रदृशं
जलदर्तुलक्ष्मनिजनृत्तमहे ॥ ४१ ॥

शरदोल्लसत्कुवलयेक्षणया
विकचारविन्दरुचिराननया ।
प्रियया च शोभनशुकस्वनया
रमते जनो मुखरहंसकया ॥ ४२ ॥

अभिनन्दयन् हिमऋतुं सुसखा
स्फटिकाचलच्छलहिमाधिकृतम् ।
फलिनीकुलं कुसुमयञ्छिशिरो
हसतीव फुल्लनवकुन्दरुचा ॥ ४३ ॥

हिमशीतवर्षपरितापपुर-
स्सरदोषमूलमिह नर्तुगणः ।
प्रियमेव साधयति नित्यमहो
स विमुक्तिमानिति विमुक्तिमताम् ॥ ४४ ॥

अमृतस्रगुत्तमफलप्रसवा-
नमृताय तत्र जनताऽर्पयति ।
उपभोक्तुमप्यविधिबन्धवशा
प्रकृतिं प्रयाति सकलोऽपि सदा ॥ ४५ ॥

प्रमदातिरेकमुपयातवता
प्रमदागणेन चरतोपवने ।
उपगीयते स्म मधुरं मधुजि-
चरितं सकान्तततिना सततम् ॥ ४६ ॥

ललना ललन्त्यभिवरं प्रवरा
लळिता लुनन्ति कुसुमानि पराः ।
इतराः स्रजो विरचयन्ति पती-
ननुरञ्जयन्ति न हि काश्चन नो ॥ ४७ ॥

वनलीलया विविधया मुदिता-
स्तरुणा घनस्तननतास्तरुणीः ।
सुलतालयेषु परिरभ्य रतिं
वदनारविन्दमधुपा दधति ॥ ४८ ॥

रसिकाः सुधाप्सु सरसीषु ततो
रुतनूपुरानुकृतसारसकाः।
विहरन्ति साकमवगाह्य धवै-
र्जलमड्डुकोत्सवहसद्वदनाः ॥ ४९ ॥

विविधा विधाय विहृतीः सलिले
विकटेषु विद्रुमतटेषु गताः ।
सुरभिं सुवर्णमथ वर्णकमा-
ददते सखीकरगतं महिळाः ॥ ५० ॥

जघनांशुकैरवयवाभरणै-
र्कुचकुङ्कुमैश्च कचमाल्यवरैः ।
नयनाञ्जनैरपि मिथोऽब्जदृशां
घटितैरलङ्कृतिरलङ्कियते ॥ ५१ ॥

तनुमध्यमा निजगृहाणि गताः
सममात्मनामसुसमैरसमैः ।
अमृतं पिबन्त्यसुलभं भविभि-
श्चषकैर्महारजतरत्नमयैः ॥ ५२ ॥

मृदुकम्रशय्यमनुरागवतां
मणिमञ्चमञ्चितदृशोऽवसरे ।
अपि चोदिता अधिरुहन्ति शनै-
र्विनयो हि भूषयति सर्वरसम् ॥ ५३ ॥

अभिकान्तमुन्नमितकान्तकुचा
किल बध्नती सकुसुमां कबरीम् ।
सुमुखी सुलक्ष्यभुजमूलवलिः
परिरभ्यते प्रणयिनाऽतिरसात् ॥ ५४ ॥

पृथुवृत्ततुङ्गकठिनोरसिज-
द्वयवारितायतनिजान्तरयोः ।
भुजयोर्युगेन रमणो रमणीं
परिरभ्य कोऽत्र रमयेन्न सुखी ॥ ५५ ॥

स्मितफुल्लमुल्लसितझिल्लिलसन्-
मणिकुण्डलं मृदुकटाक्षपटु ।
निभृतो निरीक्ष्य सुचिरं सुतनोः
प्रतिचुम्बति प्रियतमो वदनम् ॥ ५६ ॥

नतमुन्नमय्य मुखचन्द्रमसं
परिरम्भसम्भृतमुदा सुदृशः ।
उपरम्यते न तरुणेन चिरं
मधुराधरामृतरसं पिबता ॥ ५७ ॥

रभसावपातितपृथूरसिजः
परिरभ्य तत्क्षणवियाततरः ।
मणितादिसौरतवितानपटू
रमयत्यमून् युवतिसङ्घ उत ॥ ५८ ॥

अतिलौकिकान् रमयतो रमणान्
रमयन्त्यलौकिकगुणा ललनाः ।
अनुरूपरूपमतिलोकसुखं
तदलौकिकं निधुवनं लसति ॥ ५९ ॥

न रतिः श्रमादिखचिता नियमाद्
विरहव्यथाऽपि न वधूवरयोः ।
प्रतिकामिनीप्रणयतः कलहो
न समस्ति दोषरहिते हि पदे ॥ ६० ॥

सुखसंविदात्मकतया वपुषां
सुरभित्वमेव बहिरन्तरपि ।
हरिधाम्नि दम्पतिगणस्य ततो
ननु मान्यतेऽपि मुनिभिः सुरतम् ॥ ६१ ॥

शृणुताप्यलोकविषयं विषयं
सकलस्य मुक्तनिकरस्य दृशाम् ।
वपुरिन्दिरापतिरमन्दरसं
ननु सुन्दरं प्रकटयत्यनिशम् ॥ ६२ ॥

मणिराजिराजितमहामकुटं
शितिकान्तकुन्तळसहस्रत्रयम् ।
अळिकार्धचन्द्रविलसत्तिलकं
श्रवणोल्लसन्मकरकुण्डलयुक् ॥ ६३ ॥

परिपूर्णचन्द्रपरिहासिमुखं
जलजायताक्षमरुणोष्ठपुटम् ।
हसितावलोकललितैरतुलै-
रभिनन्दयत् प्रणतमात्मजनम् ॥ ६४ ॥

नवकम्बुकण्ठमहिमांशुमहो
महिमोपलेन्द्रवरहारधरम् ।
रमणीयरत्नगणविद्धलसद्-
वलयाङ्गुलीयकवराङ्गदवत् ॥ ६५ ॥

रविचक्ररुक्प्रकरचक्रकरं
विधुबिम्बकम्बु मधुराम्बुरुहम् ।
ज्वलनज्वलद्गदमुदारधनुः
पृथुवृत्तहस्तमतिताम्रतळम् ॥ ६६ ॥

वरपीवरांसमधिराजदुरो-
मणिमण्टपाग्र्यविलसत्कमलम् ।
सजगद्विसप्तकतनूदरकं
शुभनाभिकञ्जगतकाळितनुम् ॥ ६७ ॥

अतिकान्तकाञ्चिपदकाञ्चिमिळत्-
तपनीयभङ्गरुचिपिङ्गपटम् ।
वरहस्तिहस्तसदृशोरुयुगं
क्रमवृत्तचारुतरजङ्घमुत ॥ ६८ ॥

वरनूपुरं परमरुक्प्रपदं
नवविद्रुमद्युतिनखावलिमत् ।
अरिवारिजध्वजकळङ्कलसत्-
पदपांसुपावितजगत्त्रितयम् ॥ ६९ ॥

निखिलागमावगमितैरमितैः
सुखसंविदादिभिरनन्तगुणैः ।
प्रपदादिकान्तसकलावयवा-
कृतिभिः सदैक्यवददोषलवम् ॥ ७० ॥

अधिकारिणां गुणविशेषवशाद्
द्विपदाद्यनन्तचरणान्ततया ।
अतिभासितं घनगुणापघनै-
रितरैश्च तत्तदुचितैः रुचितैः ॥ ७१ ॥

नवभानुभाः कनककान्ति परं
वरहारहारि हरिनीलहरित् ।
शबळप्रभादिविविधद्युतिमत्
सुखबोधसौरभसुरूपगुणम् ॥ ७२ ॥

आश्चर्यरत्नेष्वधिकं जगत्त्रयेऽ-
प्याश्चर्यमाश्चर्यमहो मुहुर्मुहुः ।
सौन्दर्यसारैकरसं रमापते
रूपं तदानन्दयतीह मोक्षिणः ॥ ७३ ॥

इज्यते यज्ञशीलैः स यज्ञः
प्राज्ञमध्ये परः प्रोच्यतेऽन्यैः ।
गीयते गेयकीर्तिः सुगीतै-
र्विध्यबद्धैः सदाऽऽनन्दसान्द्रैः ॥ ७४ ॥

वैकुण्ठे ते श्रीविशेषा जनाना-
मत्याश्चर्यं चित्तवाचामभूमिः ।
वैकुण्ठेते श्रीविशेषाजनाना-
मुक्तश्लाघ्ये युक्तमेतादृशत्वम् ॥ ७५ ॥

यँयं सुखी कामयतेऽर्थमत्र
सङ्कल्पमात्रात् सकलोऽपि स स्यात् ।
इत्येव वेदा अपि वेदयन्ति
मुक्तिं ततः को विभवातिरेकः ॥ ७६ ॥

महानन्दतीर्थस्य ये भाष्यभावं
मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।
सुराद्या नरान्ता मुकुन्दप्रसादा-
दिमं मोक्षमेते भजन्ते सदेति ॥ ७७ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते सर्गः ॥

# द्वादशः सर्गः

तत्रानन्तस्वान्तवेदान्तसिंहे
मुख्यव्याख्यानिस्वने जृम्भमाणे ।
सद्यो मायद्वादिदन्तीन्द्रभीमे
भेजे क्षोभो मायिगोमायुयूथैः ॥ १ ॥

सम्भूयामी चोळजद्वीपिपुर्योः
पार्श्वे पापा मन्त्रयामासुरुग्राः ।
सासूया भूभूषणे वायुदेवे
मूढा यद्वद् धार्तराष्ट्रान्तिके प्राक् ॥ २ ॥

सन्मात्सर्यं बद्धमूचेऽशुभानां
वाचाऽलोलं कोपि गां धारकस्य ।
मध्ये तेषां नीचनीत्या समानो
वाचालोऽलं कोऽपि गान्धारकस्य ॥ ३ ॥

एकं तत्वं वष्टि मायामयीयं
वाक्यैः प्राच्यैरप्यवाच्यं विधत्ते ।
पूर्वाऽपूर्वा हन्त दौर्धर्व्यभूषा
चित्रश्चित्रं दर्शनाचार्यनीतिः ॥ ४ ॥

मर्त्यामर्त्यामर्त्यविद्विट्पुरोगं
विश्वं दृश्यं विप्रचण्डालपूर्वम् ।
भेदापेतं भेदि मानैः समानैः
साधीयः कः साधयेत् तामलब्ध्वा ॥ ५ ॥

सत्यं सत्यं व्यावहार्यं विधत्ते
सर्वं मोहे सर्वनिर्वाहिणी सा ।
ज्ञाने जाते दग्धवस्त्रप्रतीतं
पक्के तस्मिंस्तप्तलोहात्तवार्वत् ॥ ६ ॥

ज्ञानिश्रेष्ठश्रेष्ठविज्ञानिवर्गे
नैर्गुण्यस्थे साम्प्रतं नाथभूताः ।
आक्रन्दं मे हन्त शृण्वन्तु सोऽयं
हाहा मायावाद उत्सादमेति ॥ ७ ॥

भ्रष्टा भाट्टा न प्रभाकृत्प्रभाऽभूत्
त्रस्ता माहायानिकाद्याश्च यत्र ।
दुर्गं मायावादसत्रं दिधक्षु-
र्नोपेक्ष्या नस्तत्ववादाग्निजिह्वा ॥ ८ ॥

यँयं प्रापद् भूरिचित्तः प्रदेशं
तस्मात्तस्मादागतेरन्तरायः ।
प्रत्यज्ञायि व्यक्तमार्येण सोऽपि
प्राप्नोत् पाश्वँ ही वयं भाग्यहीनाः ॥ ९ ॥

प्रश्नः पृष्टः खण्ड्यते तेन नूनं
युक्तां युक्तिं वक्ति चासावखण्ड्याम् ।
वादिव्रातं लज्जयेन्नो विशेषा-
दाक्षेप्तेति श्रूयते किं नु कुर्मः ॥ १० ॥

प्राच्यं शास्त्रं यत् सपादं तु लक्षं
वाक्येनैकेनाक्षिपद्धर्षतीर्थः ।
इत्थं पान्थैर्वर्णितं शृण्वतः प्राग्
युष्मान् प्रापद् दूयमानं मनो मे ॥ ११ ॥

वेदव्यासो न्वेष वेदो नु मूर्तो
दिव्या मूर्तिर्यस्य सा सुस्मितस्य ।
तद्द्रष्टॄणां चेति वाणीकृपाणी
नूनं मायापक्षमूलं छिनत्ति ॥ १२ ॥

अक्लिष्टं तत्सूत्रभाष्यं बलीयो-
मानोपेतं का क्षतिर्नस्तथा चेत् ।
आस्माकाः केऽप्येवमुक्त्वा विलज्जा
लज्जासिन्धौ दुस्सहेऽमज्जयन् नः ॥ १३ ॥

तस्य व्याप्तैः शिष्यजालैस्तु गौणैः
संसत्सिन्धौ शङ्खचक्रादिभृद्भिः ।
मा गृह्येरन् विश्वसत्त्वान्तराणि
क्षेमास्यै नस्तत्र नीतिं विधत्त ॥ १४ ॥

गौणैस्तर्कैर्गौणवाक्याभिगुप्तै-
र्गौणीं बुद्धिं वर्धयन्ते नृणां ते ।
हंसानां नो वाग्विघातप्रवीणाः
सिन्धुं भूयो वारिवर्षैरिवाब्दाः ॥ १५ ॥

बाहुल्येन ह्येतदुक्त्वा खलु द्रा-
गेते विश्वं प्राप्नुवन्ति प्रकामम् ।
अस्मिन्नस्मद्दर्शनापायकाले
यद्वल्लोकापायकाले लयापः ॥ १६ ॥

आकर्ण्येत्थं तस्य वाणीमथान्यो
मानी तेषां मानिनां चित्तवेत्ता ।
स्वानां चेतो नन्दयन् मन्दचेता
धृष्टामुच्चैर्वाचमाचष्ट कष्टः ॥ १७ ॥

तेजःशङ्कामात्रतो यद् विलीनं
धिग् भीरूणां मानसं मानहीनम् ।
एकान्तेन प्राप्ततेजोविलीनं
स्थेयो यस्माद् भाति हैयङ्गवीनम् ॥ १८ ॥

येषां विद्या शाङ्करी शङ्करी नो
देवादीनां बाध्यतां साधयन्ती ।
शौक्रीवालं लज्जयेद् देवपूज्यं
तेषामेषां सन्निधौ को विषादः ॥ १९ ॥

यद्यद्वैतं कर्कशैर्गौणतर्कै
रुद्धं साध्यं नैव भात्यस्तु तावत् ।
षट्कर्मज्ञैर्दिव्यमन्त्रौषधाढ्यै-
रेतैर्गुप्तान् नो विजेता हि कश्चित् ॥ २० ॥

यद्यप्येवं न ह्युपेक्ष्यो विपक्षः
किन्तु प्राप्तो नाधुनाऽऽक्रन्दकालः ।
अप्यद्वन्द्वस्वात्मबोधप्रतीतै-
राचार्यैर्यच्छङ्क्यते शङ्कराद्यैः ॥ २१ ॥

पारम्पर्येणाऽगतं तत्वशास्त्रं
हन्तोत्सन्नं नूतनेनेत्युदीर्य ।
तेषां दोषा वर्णनीया विदग्धैः
सन्तोऽसन्तो वाऽपि मध्यस्थलोके ॥ २२ ॥

स्वाभिप्रायो ब्रह्मवत् स्यादवाच्यो
मायाशक्त्या सर्वनिर्वाहसिद्धिः ।
इत्थं नीत्या शास्त्रनीत्येव बाध्यः
सर्वो लोकः स्वात्मनो यः परः स्यात् ॥ २३ ॥

ग्रामेग्रामे वार्यतां माननैषां
पूर्वंपूर्वं सामपूर्वैरुपायैः ।
सम्प्राप्तानां मानभङ्गाय कार्यं
ग्रन्थाकर्षाद्युद्यतैरस्मदीयैः ॥ २४ ॥

इत्याद्येते कार्यमालोच्य काले
चक्रुर्वक्राश्चक्रिभक्तप्रतीपम् ।
योग्या मङ्क्तुं तेऽन्यथा स्युः कथं वा
दुःखोग्राम्भस्यन्धतामिस्रसिन्धौ ॥ २५ ॥

व्रत्याकारं वासुदेवद्विषं ते
प्राज्ञम्मन्यं पुण्डरीकाभिधानम् ।
वादव्याजाक्षेपकामाः कुमन्त्रा-
श्चक्रुर्यत्तं रूप्यपीठालयेऽमी ॥ २६ ॥

यद्वत् सिंहं ग्रामसिंहोऽशुचीच्छो
हंसं काको यद्वदेवैकदृष्टिः ।
यद्वन्मायी भूरिमायुस्तरक्षुं
तद्वद् विद्वद्वर्यमाह्वास्त मूढः ॥ २७ ॥

अप्यल्पोऽसौ न ह्युपेक्षाम्बभूवे
लोलात्मेवादक्षपक्षः पतङ्गः ।
मध्वेनाहो दुस्तरेण स्वभावात्
तेजोराजीराजितेनाग्निनेव ॥ २८ ॥

मानैर्मान्यैर्भासमानोऽसमानै-
राक्षिप्यैनं स्वं मतं साधयित्वा ।
प्रीत्यै विष्णोरुत्तमप्रीतितीर्थो
वेदव्याख्यां वेदवेदी चकार ॥ २९ ॥

आम्नायं ये पेठुराम्नायपूर्वं
प्राप्ता विप्रास्तत्र कौतूहलेन ।
पर्यासीनास्तावदाचार्यवर्यं
प्रेक्ष्यं प्रेक्षाश्चक्रिरेऽनेकसङ्ख्याः ॥ ३० ॥

उक्ताङ्गेभ्यः कादिकान् व्यञ्जयन्तं
तत्तन्मात्राव्यञ्जनादौ प्रवीणम् ।
तिस्रोऽवस्थास्तद्गुणैर्भावयन्तं
देवा दृष्ट्वा ह्यस्मरन् देवदेवम् ॥ ३१ ॥

आदौ ह्रस्वत्वेन वत्सानुसृत्यां
मात्रापादौ वर्तयन् दृश्यमानः ।
कुर्वन्नन्याश्चाप्रयरूपा विवृत्ती-
र्गोविन्दश्रीरास गोविन्दभक्तः ॥ ३२ ॥

मङ्गल्याङ्गव्यक्तभावा त्रिलोकीं
रङ्गारूढा विस्मयं प्रापयन्ती ।
कृष्णेवान्या मान्यविन्यासपादा
रेजे माध्वी सुस्वरा वेदवाणी ॥ ३३ ॥

गाम्भीर्याद्यैर्युक्तमौदार्यकार्यै-
र्नानानादश्लाघ्यमुच्चारणं तत् ।
शीक्षाशिक्षालक्षणानां हि लक्ष्यं
मान्यं मन्ये धन्यबुद्धेरतुल्यम् ॥ ३४ ॥

काल्पीः क्लृप्तीर्व्यञ्जयन् छान्दसीश्च
व्यक्तं शाब्दं शास्त्रमुद्भाव्य भूयः ।
स व्याचख्यावुक्तनैरुक्तमार्गो
ज्यायान् ज्योतिर्वेदिनां वेदमित्थम् ॥ ३५ ॥

श्रौते व्याख्योच्चारणे चारुणी ते
मादृग् देही वर्णयेदस्य को नु ।
वागीशानैर्वाग्विहङ्गेन्द्रजीवै-
र्भूर्याश्चर्यैर्वर्णिते ये प्रणम्य ॥ ३६ ॥

छन्दस्सार्थं सार्थमत्रामुनेत्थं
प्रोक्तं श्रुत्वा ब्राह्मणा ब्रह्मणेव ।
सर्वे सौम्या जिष्णुजिज्ञासयाऽमी
प्राप्य प्रोचुश्चित्रकायाभिधानम् ॥ ३७ ॥

प्राज्यप्रज्ञः प्राज्यया प्रज्ञयाऽसौ
हन्तावोचन्मन्त्रवर्णाभिधेयम् ।
तत्प्रत्यर्थी प्रार्थ्यते वक्तुमेतत्
प्राज्ञास्माभिः श्रोतुकामैर्भवांश्च ॥ ३८ ॥

इत्युक्तस्तैरेष विस्तारिबुद्धेः
प्राप्तुं साम्यं सम्प्रवृत्तो दुरात्मा ।
हास्योऽत्राभूद् वासुदेवप्रभार्थी
यद्वत् पूर्वं पौण्ड्रको वासुदेवः ॥ ३९ ॥

आङ्गादेशादुत्तरं रादिशब्दं
श्रुत्वा नारेत्युक्तवन्तं पदं तम् ।
व्याख्यालौल्यादैतरेयादिसूक्ते
पृथ्वीदेवा निन्दनीयं निनिन्दुः ॥ ४० ॥

शार्दूलाख्यां प्राप्य सम्भावितः प्राक्
लोके धूर्तो मायिगोमायुरेषः ।
वादिद्वीपिध्वंसिनं मध्वसिंहं
प्राप्तो हीत्थं शब्दशेषो बभूव ॥ ४१ ॥

कृष्णाभीष्टा शास्त्रविस्पष्टसञ्ज्ञा
या स्वीया श्रीः पालिता सद्द्विजेन ।
पद्माख्यासत्सैन्धवेनाहृतां तां
शुश्रावाग्र्यानन्दतीर्थाख्यपार्थः ॥ ४२ ॥

तूर्णं तीर्णादभ्रमार्गोऽथ सार्यः
सम्प्राप्तोऽसौ गोगणैर्भीषयित्वा ।
संयम्यान्तर्यन्तृकामेन हास्यं
सम्प्राप्तश्रीर्निर्जितं तं जहास ॥ ४३ ॥

दुष्टात्माऽसौ भद्रमेकाकिनं यः
क्षेप्तुं हेतुः सौख्यदाख्यं बभूव ।
हर्यंशोऽयं तं न चक्षाम भूय-
स्तोके सन्ने सूकरं केसरीव ॥ ४४ ॥

तस्य त्रासात् पृष्ठतस्तिष्ठतोऽभूत्
क्षेमापेक्षी यो जनः प्राग् जितोऽपि ।
मध्येऽन्येषां गोततीस्तत्प्रयुक्ताः
सोऽद्यज्जिष्णुः पञ्चषैर्गोविशेषैः ॥ ४५ ॥

विष्णोर्भूयः शोभयद्भिः पदान्तं
पारम्पर्येणेर्यमाणैरवार्यैः ।
गोव्रातैस्तं दारयित्वा न्यगृह्णात्
कञ्जाख्यानं सिन्धुपं मध्वपार्थः ॥ ४६ ॥

आस्तामास्तामेष वो विश्वमोषो
रेरे मायावादिचोरा द्रवेत ।
द्रष्टाद्रष्टा निग्रहीता ध्रुवं वः
प्राप्तः कालो द्राग् गुहान्तं प्रवेष्टुम् ॥ ४७ ॥

तेजो विद्वच्चक्रचन्द्रस्य लीनं
विध्वस्ताऽलं वादिनक्षत्रलक्ष्मीः ।
विश्वव्याप्तं यत्तु तद्दीप्तिमूलं
युष्मत्प्रेष्ठं तन्निरस्तं तमश्च ॥ ४८ ॥

पूर्वाशामापूर्य विश्वप्रकाशी
गोसन्दोहैः सप्तविद्याख्यवाहः ।
युष्माभिः किं नैक्षि देदीप्यतेऽसौ
देवः साक्षात् सर्ववित्सर्वदीपः ॥ ४९ ॥

सर्वाधारं ब्रह्मसञ्ज्ञं विहायो
रम्याकारं शारदेन्दीवराभम् ।
सन्निर्णीतं गुण्यलं शब्दभेदै-
र्मध्वादित्यं संश्रितं कोऽपिधत्ते ॥ ५० ॥

विधावतविधावत त्वरितमत्रिवादासुरा
अदभ्रधिषणाभिधो नरहरिर्हि जाज्वल्यते ।
स युक्तिनखरैः खरैर्मुखरमूर्खदुःखाङ्कुरै-
र्विदारयति दारुणप्रवचनप्रणादोऽप्रियान् ॥ ५१ ॥

धत्ते रूपाण्यनन्तान्यपि भुवनपतेर्यो हृदाऽप्येकपक्षो
दक्षः सद्भ्योऽखिलेभ्योऽप्यमृतमिह ददौ केवलं यो न मात्रे ।
पक्षिश्रेष्ठोऽपरः सन्नमितमतिपदोऽसम्पदे स्यादयं वो
मा दर्पं मायिसर्पा भजतभजत तास्ता गुहा द्राग् द्विजिह्वाः ॥ ५२ ॥

वेदव्रातसुदर्शनः परिलसत्तर्काख्यशङ्खध्वनि-
र्विभ्राजिष्णुपुराणसंहतिगदः श्लोकौघशार्ङ्गान्वितः।
सत्सूत्रेष्वितिहासनन्दकचणो मध्वाख्यनारायणः
प्राप्तो वो निजिघृक्षया द्रवत हे मायाविदेवद्विषः ॥ ५३ ॥

इति निगदति मायावादिविद्वेषवेषे
शुभजननिकरे स्वारामतोऽस्मात् प्रयातः ।
न्यवसदमरधिष्ण्ये प्राग्रवाटाभिधाने
गुरुमतिरभिनन्दन् देवमानन्दमूर्तिम् ॥ ५४ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते द्वादशः सर्गः ॥

# त्रयोदशः सर्गः

पृथुदर्शनमुत्थितं कृतार्थं
पृथिवीभृत्प्रणतिं गृहीतवन्तम् ।
निजशिष्यमुदेऽथ सह्यमाप्तं
पुरुषः कश्चिदुपाययौ कदाचित् ॥ १ ॥

भगवानिह नः स्वकिङ्कराणा-
मचिरेणाऽव्रजतादनुग्रहाय ।
इति कार्यचिकीर्षयाऽऽर्थयत् त्वां
नृप इत्यभ्यधितैष तं प्रणम्य ॥ २ ॥

अथ माघवतीमपास्य काष्ठां
व्रजता प्रैधिततेजसा प्रतीचीम् ।
परिशोधयता स्वपादसङ्गात्
पृथिवीं प्राज्ञदिवाकरेण रेजे ॥ ३ ॥

अशुभानपहाय मायिजुष्टा-
नधमाद्रीनिव गोत्रनिम्नगौघैः ।
सुजनैस्तरसाऽभिगम्यमानः
परमस्नेहतया क्रमप्रसन्नैः ॥ ४ ॥

सुमनःफलशोभिनोऽत्र पुंसो
नमयन् गोभिरनोकहानिवोच्चान् ।
अपि भङ्गमुपानयन्ननम्रान्
दृढभावादपरानवार्यवीर्यः ॥ ५ ॥

गमनोत्सवविस्मितैर्निषेव्यो
विविधैर्जानपदैर्जनैरजस्रम् ।
परिसृत्वरकीर्तिरार्तिमुक्त्यै
पुरुषैर्दूरभुवश्च गम्यमानः ॥ ६ ॥

अमरैरमरानुगैर्मुनीन्द्रै-
रपरेक्षाविषयैश्च सेव्यमानः ।
हरिपादसरोजसङ्गसारो
भुवने पावनपावनो निकामम् ॥ ७ ॥

अयमप्रतिवारणः प्रयाणे
परमानन्दसुतीर्थसूरिराजः ।
विबभावतिवेलमच्छरूपः
सुरसिन्धोरिव सन्ततप्रवाहः ॥ ८ ॥

समयेन गतो महीयसाऽसौ
विषयं स्तम्भपदोपसर्जनाख्यम् ।
मदनाधिपतेः सुधाम धाम
प्रविवेशाखिललोकवन्दनीयम् ॥ ९ ॥

क्षणदामिह तावदूषिवांसं
विहिताहर्मुखयोग्ययोगमेनम् ।
गमनोद्यमलक्षणैरजानन्
गमनायोद्यतमाशु शिष्यसङ्घाः ॥ १० ॥

पुरतो विसृताः समाधिशुद्ध्यै
यतयस्तत्र पटीः कषायवेषाः ।
सहसोदहरन् स्वयोग्यमुद्रा-
युतदण्डादिकधारणोद्यमेन ॥ ११ ॥

अवधार्य विशेषकारिशङ्ख-
प्रकटाङ्कान् सुधिया गतार्द्रभावान् ।
लसिता तुळसीस्रगस्य कण्ठे
हरिनिर्माल्यतयोचिता न्यधायि ॥ १२ ॥

यतधीर्गुरुचक्रिमूर्तिपूर्णं
यतनिश्वासवचा विशोध्य पाणी ।
गुणकुण्डलमण्डितं विमानं
गुणबन्धं कवचावृतं बभार ॥ १३ ॥

सकमण्डलुमण्डलावलम्बं
स्वयमेवालघुपुस्तकादिभारम् ।
युवशिष्यगणो दधे नयत्ना-
न्न हि दाक्ष्यस्य समो गुणोऽपरोऽस्ति ॥ १४ ॥

अतिसम्भ्रमतः परिभ्रमन्तं
भरदामानवलोकिनं चिराय ।
अनुयोगपरं मुहुः प्रमत्तं
जहसुर्नूतनशिष्यमत्र केचित् ॥ १५ ॥

अथ तत्क्षणघट्टितोरुघण्टा-
घननादव्यपदेशतः परेण ।
अमितप्रमतिः प्रचोदितोऽसा-
विति निर्यत्सु निजेषु निर्जगाम ॥ १६ ॥

धृतमातपवारणं वरेण्यं
व्रतिराजं तमुपर्युपर्युदारम् ।
उदयन्मिहिरोपरिष्ठपूर्ण-
द्विजराजश्रियमाययावभूताम् ॥ १७ ॥

भुवनत्रयधारिणं मुकुन्दं
दधदन्तः स दधे गुरुः स्वयं च ।
अपि केनचिदित्यदो न चित्रं
ननु स प्राणपतिर्बभार तं च ॥ १८ ॥

यतयो गृहिणोऽथ वर्णिमुख्याः
श्रुतिगास्त्यक्तनिषिद्धकाम्यभावाः ।
इह मूर्तिधरा इव स्वधर्माः
शतसङ्ख्याः शतसङ्ख्यमन्वगच्छन् ॥ १९ ॥

परिवारजना न मार्गदुःखं
प्रययुः पूरुषरत्नमीक्षमाणाः ।
इति नाद्भुतमस्य हि प्रयान्ति
स्मृतिमात्राद् भविनो भवापवर्गम् ॥ २० ॥

मदनेश्वरवल्लभप्रदेशे
प्रभुमायान्तमथाभ्यपद्यत द्राक् ।
जयसिंह इमं नृसिंहवर्यः
शुभधीः स्तम्भविशिष्टसिंहनामा ॥ २१ ॥

अवतीर्य पुरैव वाहनात् स्वा-
दपि मार्गादपसार्य सैनिकान् सः ।
सह कैश्चन भूसुरैरवाप्त-
स्त्रिजगत्पूज्यपदान्तिके ननाम ॥ २२ ॥

पृथिवीपतिनाऽनुगम्यमानो
विनयाद् भक्तिरसार्द्रमानसेन ।
अचिरेण स विष्णुमङ्गलस्य
प्रययावायतनोत्तमस्य पार्श्वम् ॥ २३ ॥

नरदेवदिदृक्षया समेता
उभयग्रामजना जनाः परे च ।
उपयान्तमनन्तमानसं तं
मुहुरैक्षन्त कुतूहलाब्धिमग्नाः ॥ २४ ॥

पुरतो मधुरस्वनैर्वदद्भिः
स्वकृताः कर्णसुखा मुकुन्दगाथाः ।
धृतपङ्कजबीजचक्रचिह्नैः
कृतनृत्तैश्चतुरैर्निषेव्यमाणम् ॥ २५ ॥

कलिताञ्जलिना स्फुटानुयातं
जनसम्बाधसहेन भूमिभर्त्रा ।
करुणाविषयं चिकीर्षुणा स्वं
व्रजता किङ्करतामकैतवेन ॥ २६ ॥

इदमित्थमितीक्षणैर्नराणा-
मपरिच्छेद्यमहिष्ठधामरूपम् ।
अधिकं धरणीमलञ्चिकीर्षुं
स्फुटमुद्यन्तमिव द्युनाथमन्यम् ॥ २७ ॥

अशनैः शनकैरिवाऽव्रजन्तं
युवसिंहप्रवरप्रगल्भयानम् ।
अतिपाटलपादपल्लवाभ्या-
मवनीं पावनतामलं नयन्तम् ॥ २८ ॥

नखनिर्जितपद्मरागरागं
वरकूर्मप्रपदं निगूढगुल्फम् ।
सुरवर्यकराग्रसेव्यजङ्घं
द्विरदोदारकरोपमोरुयुग्मम् ॥ २९ ॥

शुभशुद्धनितम्बबिम्बराज-
न्नवकौशेयविशेषबाह्यवस्त्रम् ।
तनुकुक्षिगळाळिकेषु रेखा-
त्रितयेन प्रकटेन शोभमानम् ॥ ३० ॥

मृदुसूक्ष्मघनारुणाविकाच्छ-
प्रकटप्रावरणेन भासमानम् ।
अतिनूतनतिग्मभानुभासां
निकरेणेव सुवर्णसानुमन्तम् ॥ ३१ ॥

पृथुवक्षसमुन्नतांसभित्तिं
गुरुवृत्तायतहृद्यबाहुदण्डम् ।
परमारुणपाणिपल्लवान्तः
स्फुरितोर्ध्वध्वजलाञ्छनादिमन्तम् ॥ ३२ ॥

परिपूर्णशशाङ्कबिम्बशङ्का-
विषयं प्राक् सहसाऽवलोकनेन ।
अकळङ्कतया परं विविक्तं
वदनं बिभ्रतमच्छविभ्रमाब्धिम् ॥ ३३ ॥

अतिसुन्दरमन्दहासराज-
न्नवकुन्दाभरदं शुभारुणोष्ठम् ।
कमलायतलोचनावलोकै-
रपि लोकान् सकलान् प्रहर्षयन्तम् ॥ ३४ ॥

अतिभासुरकर्णभासितश्री-
तुळसीगुच्छमतुच्छकान्तिगण्डम् ।
भुवनत्रयभूत्यभूतिदाने
चतुरभ्रूवरविभ्रमं सुमौलिम् ॥ ३५ ॥

सकलावयवान् स्फुटं मिमानाः
प्रतिमालक्षणलक्षणाय लक्ष्यम् ।
चतुरा विदधुर्यदीयगात्रं
स सुलक्ष्मेत्यधुना निगद्यते नो ॥ ३६ ॥

अतिलोलदृशां समीक्षितुं स्वं
जनसम्बाधभयेन दूरभाजाम् ।
समदर्शयदूर्ध्वमोरसोऽसौ
दययैवोरुजनौघमध्यगोऽपि ॥ ३७ ॥

सविकासदृशां कृताञ्जलीनां
जनतानां परमादरान्नतानाम् ।
वलयेन वृतः प्रियं मुरारेः
प्रविवेशाऽयतनं प्रबर्हबोधः ॥ ३८ ॥

विविधप्रभुमध्यसन्निषण्णो
नरदेवेन समं स गूढदेवः ।
विबभावुडुराडिवोडुमध्ये
सह मह्यास्तनयेन पूर्णबिम्बः ॥ ३९ ॥

अवदत् स कथां रथाङ्गपाणे-
र्भगवान् भागवते भवापहन्त्रीम् ।
अनुकूलगुणस्वरादिभाजा
निजशिष्यप्रवरेण वाच्यमाने ॥ ४० ॥

कथनं तदुदारधैर्यसारं
मधुरं पुष्कलभाववत्प्रसन्नम् ।
विदुषोऽविदुषोऽपि शृण्वतोऽलं
व्यधिताऽनन्दरसाम्बुधौ निमग्नान् ॥ ४१ ॥

गमनासनसङ्कथादिलीलाः
स्मृतिमात्रेण भवापवर्गदात्रीः ।
कथमप्यमराः प्रपञ्चयेयु-
र्ननु मध्वस्य न मादृशोऽल्पबोधाः ॥ ४२ ॥

सुतपःकवितादिसद्गुणानां
लिकुचानां कुलजोऽङ्गिरोन्वयानाम् ।
अभवद् गुहनामको विपश्चित्
कविवर्योऽखिलवादिवन्दनीयः ॥ ४३ ॥

दयिताऽस्य सती गुणानुरूपा
विधिवीर्येण मुहुर्मृतप्रजाऽपि ।
अभजद् भुवनप्रभू हरीशौ
सुतकामा वसुदेवसूनुभक्ता ॥ ४४ ॥

परमेश्वरयोः प्रसादयोगात्
सुतरत्नं तदसूत सूरिपत्नी ।
परिषत्पदपट्टनेषु नार्घो
विविदे यस्य समः परीक्षकाग्र्यैः ॥ ४५ ॥

वदनेन्दुमवेक्ष्य नन्दनस्य
स्वकुलोत्तारणदक्षलक्षणस्य ।
कृतकृत्यतया क्रियाः प्रकुर्वन्
कविराख्यादुचितां त्रिविक्रमाख्याम् ॥ ४६ ॥

कळभाषण एव सूरिपोतः
कविरासीदनवद्यपद्यवादी ।
अवभाति ननु प्रभाप्रभावी
भगवान् बालतरोऽपि तिग्मभानुः ॥ ४७ ॥

सकलाङ्ग्युतावभातशाखः
समये प्राप्त उदारपक्षिसेव्यः ।
स ससर्ज सदध्वगोपकृत्यै
लिकुचः काव्यफलं रसाभिरामम् ॥ ४८ ॥

प्रतिपादितमात्मना यथार्थं
पृथुमायासमयस्य दुर्घटत्वम् ।
स्वगुरौ परिहर्तुमक्षमेऽपि
श्रुतवांस्तं स वयस्यबोधितोऽलम् ॥ ४९ ॥

भगवत्युदिते सगोविलासे
वटुभावं त्यजति त्रिविक्रमाख्ये ।
अपि भानुपुरस्सराः समस्ताः
प्रययुः कीटमणिप्रभत्वमाशु ॥ ५० ॥

अतिदक्षमतिं सपादलक्षे
समये मायिजनस्य युक्तिशूरम् ।
महितं हि महीतळे महिम्ना
जनको नन्दनमब्रवीदुपांशु ॥ ५१ ॥

शृणु वाचमिमां विचारितार्थां
न कलौ निर्गुणभावना सुखाय ।
इति गौणविमुक्तये गुणाढ्यं
भज देवं वसुदेवसूनुमेव ॥ ५२ ॥

इति तातवचो निशम्य किञ्चित्
तरळात्माऽपि विचार्य शास्त्रसारम् ।
परमेव स पारमारुरुक्षु-
र्विगुणोपास्तिमुपाशृणोत् परेभ्यः ॥ ५३ ॥

निजधर्मरतो गृहिप्रबर्हः
कलिकालाकुलितान्तरोऽपि हन्त ।
नितरां निशितात्मना निसर्गात्
स्फुटमालोचयदित्यसौ कदाचित् ॥ ५४ ॥

रचितं ननु सूत्रमत्र मानं
विदुषा सत्यवतीसुतेन साक्षात् ।
अपरस्परसङ्गतानि भाष्या-
ण्यपि सर्वाणि न मानतां व्रजेयुः ॥ ५५ ॥

यदि तेषु निराग्रहान्तराः स्मः
सुघटं नोपलभामहे हि किञ्चित् ।
न तथाऽपि परम्परोपयातं
न पठामः प्रणयेन शाङ्करीयम् ॥ ५६ ॥

घटनोपनिषत्सु नाल्पबुद्धेः
सुघटेत्यभ्युपगम्य चिन्तयामः ।
न विमुक्तिमुपैति कोऽपि मुक्त्वा
समयोक्तामिह यामिमामुपास्तिम् ॥ ५७ ॥

विततः सुखसच्चिदद्वयात्मा
समुपास्यो विहितो हि तत्वविद्भिः ।
स च नावयवी निरूप्यते चेद्
द्युतिमात्रं च न हीत्यदो रहस्यम् ॥ ५८ ॥

यदि चेद्दगुपास्यतेऽस्य रूपं
तिमिरत्वेन विभाति पारिशेष्यात् ।
फलमप्यथ मुक्तिरीदृशी स्यादि-
ति नो नैव धिनोत्युपास्तिरेषा ॥ ५९ ॥

अथ वेदपुराणभारतानि
स्वयमालोच्य यथावबोधमत्र ।
गुणवन्तमुपास्महे मुकुन्दं
स्मृतिधर्मान् स्फुटमाचरन्त एव ॥ ६० ॥

अवधार्य यदेति कार्यमार्यः
स विवेकादुपचक्रमे विधातुम् ।
परिपूर्णमतेर्जगत्सु कीर्तिं
परिपूर्णामशृणोत् तदा विशुद्धाम् ॥ ६१ ॥

विहिनस्ति हि नो जनोऽतिवाग्ग्मी
समयं कोऽपि परम्परोपयातम् ।
क्षिप तं त्वमुदारयुक्तिशूरो
न परे तत्र समर्थतां व्रजेयुः ॥ ६२ ॥

तव वेदनदीर्विगाह्य भूयः
समयाम्भोधिषु कुर्वतो विहारम् ।
नवकाव्यरसप्रियस्य वादि-
द्विरदेन्द्र प्रतिवारणो न जज्ञे ॥ ६३ ॥

उपयाहि यशः शशाङ्कगौरं
निजयूथस्य भयं निराकुरु त्वम् ।
अधुना विधिनोपपादितं तं
प्रतिवादिप्रतिवारणं निवार्य ॥ ६४ ॥

इति मायिजनेन तत्रतत्र
स्वजनत्वेन स तावदर्थ्यमानः ।
अनुकूलवचा महिष्ठमानो
मनसा संशयमाप संशयच्छित् ॥ ६५ ॥

शितमध्ववचःसृणिप्रयोक्तॄन्
पुरुषानेष विषादयन् कवीभः ।
विविधोत्तरधूळिपातनेन
प्रतिघेनाधिकमन्धयाश्चकार ॥ ६६ ॥

क्षणदासु विचक्षणः स वीक्ष्य
प्रचुरप्रज्ञमनोज्ञशास्त्रसारम् ।
अपराविदितः प्रसादगर्भं
विदधे विस्मयमान्तरं महान्तम् ॥ ६७ ॥

विदितवान् व्यवहृत्य सुदर्शनं
बहळबोधमवेक्ष्य स निश्चयात् ।
अपि न तस्य मतं सहसाऽऽददे
ननु विमृश्य कृती कुरुतेऽखिलम् ॥ ६८ ॥

तं विष्णुमङ्गलगतं बहळप्रबोधं
प्राप्याभ्यवन्दत तदाऽयुगविक्रमार्यः ।
आनन्ददं स चतुराननहासलक्ष्म्या
तत्वं प्रवेत्तुममरेन्द्र इवाब्जयोनिम् ॥ ६९ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते त्रयोदशः सर्गः

# चतुर्दशः सर्गः

परिवृढघनसङ्घे राजसिंहोर्जशक्त्या
त्यजति मलिनभावं नीरसत्त्वान्निकामम् ।
स्फुटमुदयति तेजस्व्युज्ज्वले मध्वभानौ
सुजनजलजकान्त्यै विश्वमासीन्मनोज्ञम् ॥ १ ॥

कृतमपकृतमार्यैः क्षम्यतां क्षान्तिभूषै-
रिति मृदु वदतां च प्रार्थनाभिः प्रभूणाम् ।
अपहृतमपरेषां मन्त्रतो ग्रन्थजातं
दशहृदयनियोगादग्रहीच्छङ्करार्यः ॥ २ ॥

परिवृतमवनम्रैर्ग्रामणीग्राम्यपूर्वै-
रवनतमुरुचेतःपादपार्श्वे नृसिंहम् ।
सहजविजयतोऽयुग्विक्रमार्यः प्रसन्नः
कविकुलतिलकोऽसावाशिषाऽतोषयत् तम् ॥ ३ ॥

उपचरति नितान्तं हन्त पौरन्दरी धू-
र्धुसदसि भजतो यं दुर्लभा दभ्रभाग्यैः ।
दिशतु स परमप्रयानन्दतीर्थाङ्घ्रिरेणु-
र्धरणिधर सुखं ते सन्ततं स्वान्तरेति ॥ ४ ॥

अनतिपरिचितस्याप्यस्य सोऽयं कवीन्द्रो
गुणरसमतिगूढं ज्ञातवानित्यचित्रम् ।
मधु मधुकरराजो निष्पतन् पौष्पमाप्तुं
ननु परिचयहीनः काननेऽपि प्रभुः स्यात् ॥ ५ ॥

अखिलखलकुलानां वर्धयन् द्वेषदोषं
विदधपि नराणां कौतुकं मध्यमानाम् ।
स्वगतिसमुचितानां भूतिदायी शुभानां
बहळहृदिह निन्ये शर्वरीः काश्चिदेवम् ॥ ६ ॥

उदयति विनताया नन्दने श्लाघ्यकाले
स कृतसकलकृत्यः कृत्यवेदिप्रवेकः ।
अरुणयवनिकान्तर्ब्रह्म नारायणाख्यं
गुरुगुणमभिदध्यौ योग्ययोगासनस्थः ॥ ७ ॥

अतिधवळितदन्ता दन्तकाष्ठैः प्रशस्तै-
रपि युगपदनेके सस्नुरत्र व्रतीन्द्राः ।
गुरुभिरभिहितेष्वाचारभेदेषु निष्ठां
स्फुटमवगमयन्तः सौष्ठवात् कर्मणां च ॥ ८ ॥

चरमसमयसुप्ताः पूर्वमुत्थाय शिष्या
गुरुजनपरिचर्यां चक्रिरे दुष्करां च ।
सबहुमति तदाद्यप्यार्धरात्रात् प्रसन्नाः
सुगतिरपरथैषां स्यात् कथङ्कारमिष्टा ॥ ९ ॥

श्रवणमननहेतोः प्राक् चिरायास्तनिद्रः
सपदि विवशयन्त्या निद्रया ग्रस्तचेताः ।
स्वयमपि नयति द्रागङ्गवस्त्रादि पूज्ये
सपदि विगतनिद्रः कोऽपि शिष्योऽन्वशेत ॥ १० ॥

विहितमविहितं प्रागेव कस्माद्विनिद्रै-
रिति गुरुपरिवादाशङ्कया नम्रगात्राः ।
चिरमनवतरन्तः श्रावका मुक्तमार्गा
गुरुषु जलसकाशस्थेषु तूष्णीमतिष्ठन् ॥ ११ ॥

विपुलहृदयपार्श्वे दीपदीप्तिप्रदीप्रे
दरवरपरिपूर्णैर्वार्भिरर्घ्यादि दत्त्वा ।
यतिरतियतचेताश्चक्रिणोऽर्चानिकायात्
कुसुमसमितिमग्र्यामादरादुज्जहार ॥ १२ ॥

अमृतमपि निरीक्ष्याऽस्रावि निर्माल्यसूने
घृतमिदमिति सद्यो भ्रान्तिमन्तोऽपि शिष्याः ।
श्रद्धुरधिकवाक्यैर्विभ्रमास्तच्च पश्चा-
दनुदिनममृतान्नैस्तस्य सेव्यस्य शक्त्या ॥ १३ ॥

अगमदुचितमन्त्रैस्तूदयानां त्रयाणां
कृतिभिरनुमतात्मा तत्र पश्चाङ्गविद्भिः ।
उदयमहिमरोचिश्चक्रवर्ती त्रिशक्ति
र्दधदतिबृहदन्तः षड्गुणं स्वात्मतेजः ॥ १४ ॥

तिमिरनिकरकुम्भिव्रातमत्यन्ततीव्रं
स्थिरतरमखिलानां प्राणिनां रुद्धमार्गम् ।
भुवनभवनपूर्णं भानुमानञ्जनाभं
हरिरिव नखरैः प्राग् रश्मिजालैर्निरास ॥ १५ ॥

मधुरपतगरावाः शान्तनैशाम्बुबाष्पाः
सपदि विपुलरागाः स्वाभिसारात् प्रसन्नाः ।
अरुणतरणिरत्यच्छाम्बरा दिक्पुरन्ध्रीः
स्मितसरसिजवक्त्राः स्वैः करैरालिलिङ्गे ॥ १६ ॥

प्रणतिरभसधूलीबद्धशोभाविशेषा
दधुरुपकृतिमत्तां साधुजालान्तराप्ताः ।
समयमुपनतं संवेदयन्तो वयस्या
इव दशशतकेतोः केतवः श्रावकाणाम् ॥ १७ ॥

निहितमुचितमुच्चं योगपीठं प्रवक्तुः
परिषदि परितोऽमी सत्वराः सत्वभाजः ।
द्रुतमवसितकृत्यैर्धन्यसंन्यासिवर्गैः
श्रवणपरमकृत्यायोपतस्थुः समेताः ॥ १८ ॥

बभुरमलगुणानां शोभनाच्छादनानां
मुररिपुनिलयानां हन्त वैदान्तिकीनाम् ।
सपदि सुविवृतानामन्तरर्था धियां वा
विविधकवलिकानां सञ्चयाः पत्रिकाणाम् ॥ १९ ॥

अनतिविरळभावा अप्यनन्योन्यसङ्गा
ऋजुतरततनानापङ्क्तिसाम्याप्तशोभाः ।
द्विरदतुरगदेश्या दूरतो वर्जितान्ताः
कुशललिखितरूपा रेजिरे तेषु वर्णाः ॥ २० ॥

सपदि ददृशुरेके वाचनीयादिभागं
परिचयपटुताभ्यां तावदेके चिरेण ।
हरिगुरुनमनं द्राग् यत्नतोऽमी विधाय
प्रययुरपरसाम्यं सिद्धये स्याद्धि यत्नः ॥ २१ ॥

यतवचसि जनेऽस्मिन्नानते सन्निरस्यन्
सिचययवनिकां तां सान्ध्यजीमूतरक्ताम् ।
रविरिव रविपूज्याङ्घ्रिः समाजान्तरिक्षे
व्यलसदतिशयालुः सन् सहस्रप्रकाशः ॥ २२ ॥

त्रिभुवनवरतेजोव्यक्तवेदार्थशुक्ल-
त्रितयरसतया ये वर्णिता वर्णवर्याः ।
पृथुमतिरथ तेषामैक्यमापाद्य सम्यक्
प्रवचनपरिशुद्ध्यै स्म प्रणौति प्रवीणः ॥ २३ ॥

स्वरमचरमकाले मन्द्रमेवात्यजद्भिः
स्फुटमुपनिषदन्ते वाचकैर्वाच्यमाने ।
प्रवचनमतिचित्रं प्राणभाजां श्रुतीना-
ममृतममृतभावस्यैष हेतुं चकार ॥ २४ ॥

धनमिव सधनायेभ्योऽर्कसूनुः प्रसन्नः
शरशतमिव पार्थः संयुगार्थिभ्य उग्रः ।
अरतिविरहितः सोऽनारतं नाऽदिशन्नो
प्रतिवचनमदीनं चोदकेभ्योऽखिलेभ्यः ॥ २५ ॥

अथ दशशतशोचिष्याप्रयाति प्रतीच्यां
प्रवचनमवसाय स्नातुमायात् तटाकम् ।
पृथुमतिरिह तावच्छ्रेष्ठसंसर्गलोलैः
समगमि सपदि स्वर्निम्नगाद्यैश्च तीर्थैः ॥ २६ ॥

घनरसनिकरोऽसावन्तरत्यन्तशुद्धो
मुनिगण इव भूयःस्नेहवान् प्राग् दधानः ।
प्रतिकृतिमखिलज्ञस्याऽपरोक्ष्येण तावत्
स्फुटमलभत रूपं मज्जने सज्जनेष्टम् ॥ २७ ॥

अपरिमितमनीषस्योल्लसच्छङ्खबाहो
रथचरणशिलानां तन्वतोऽत्राभिषेकम् ।
प्रतितनव उदारास्तास्वलं सन्निधातु-
स्तनव इव विरेजुः पाञ्चजन्यप्रियस्य ॥ २८ ॥

अभिदधति मुनीन्द्रा द्वादशाब्दोपवास-
प्रतिमफलमलं यत्सेवनं भक्तियुक्तम् ।
अधिकममरनद्याद्याप्लवाद् धन्यमान्या-
दपिबदलवबोधो विष्णुपादोदकं तत् ॥ २९॥

तरणिभिरिव गौरैरूर्ध्वपुण्ड्रैर्द्विषड्भिः
सदरपरमचक्रोदीर्णतेजा हरीष्टः ।
मुररिपुविमुखानां दुस्सहो देहभाजां
लयसमय इवान्यो मान्यधीराबभासे ॥ ३० ॥

समधिकधिषणस्य प्रेक्षमाणो जनौघः
प्रकृतिमधुरमास्यव्याजपूर्णेन्दुबिम्बम् ।
अमुचदपसरेति श्रावकोक्तेः पुराऽस्मिन्
प्रचलति पदवीं तां प्राञ्जलिस्तूर्णमारात् ॥ ३१ ॥

गुरुचरणसरोजद्वन्द्वनिर्णेजनाम्भो
दधति जननिकाये सर्वमुर्वीगतं च ।
अवनिरनभिनन्दिन्यप्यदश्चक्षमेऽसौ
कथमपि कथमेव स्यात् क्षमाख्याऽन्यथाऽस्याः ॥ ३२ ॥

अविदितरसभेदं शीतळं लघ्वगन्धं
विमलममलपाणिः पाणिजैरप्रविष्टम् ।
वदनपवनभीत्या पार्श्वतो बिभ्रदग्र्यं
कमथ करकपूर्णं संयमीहानिनाय ॥ ३३ ॥

विहसितबिसभङ्गश्रीप्रकर्षं सितिम्ना
जलजममृतपूरैः पूरयामास रम्यम् ।
समयगुणविशेषालोचकैर्लाळनीयः
सुसुरभिसुमनोभिः स स्फुटं गौरपक्षः ॥ ३४ ॥

विमलमलयजाम्भोबिन्दुभिश्चर्चितार्चो
नवलसिततुळस्या पुष्पराज्याऽऽर्चिचत् सः ।
स्थलजजलजवल्लीवृक्षवीरुत्समस्त-
प्रसवविजयलक्ष्म्या मूर्तयेवेन्दिरेशम् ॥ ३५ ॥

स ददधिकबोधः षोडशात्रोपचारान्
व्यरहयदगुणान् द्वात्रिंशदागःपुरोगान् ।
अगणितगुणमुच्चैस्तोषयन् शार्ङ्गपाणिं
षडपि परमभक्त्याऽनूपचारान् दिदेश ॥ ३६ ॥

तमरुणमणिवर्णं दिव्यदेहाख्यगेहे
स्नपितमतिपृथुश्रद्धानदीचित्तवार्भिः ।
ननु स यजति नित्यं हृत्सरोजासनस्थं
न तु सकृदिति पुष्पैरष्टभिर्भावपुष्पैः ॥ ३७ ॥

कृतपरमसपर्यः सान्द्रसच्चन्दनाम्भः-
परिमळितभुजोरोमण्डलांसो मनीषी ।
स्मितरुचिरमुखेन्दुः स्निग्धकौशेयवासाः
स मुनिसुरनराणां चक्षुषामुत्सवोऽभूत् ॥ ३८ ॥

परमथ परमान्नं प्राप्तमेवाप्रयासं
प्रभुरिह बुभुजेऽसौ वेदवादप्रवीणः ।
अजितपरमभक्तः सन्ततं मन्यमानः
सकलजगदधीशः प्रीयतां शौरिरित्थम् ॥ ३९ ॥

सहचरपरिक्लृप्ते सूक्ष्मवस्त्रास्तृतेऽसौ
अवितनुरुहरूपौशीरवर्ये निषण्णः ।
अरमयदिह नानाहृद्यविद्याविलासैः
कविजनपरिवारं मण्डयन् मण्डपाग्र्यम् ॥ ४० ॥

अवसरमधिगम्य भ्रूविजृम्भादभीष्टो
मुखसततगलक्षीभूतपाणिप्रवाळः ।
स्मितनयनविकासैस्तस्य विज्ञातभावः
श्रवसि किमपि कार्यं मन्त्रयामास मङ्क्षु ॥ ४१ ॥

प्रणतिपरमकृत्याः सन्मतेर्ये जनौघा
विबभुरनतिदूरे संहतास्तानतीत्य ।
अहमहमिकयाऽऽशु प्राप्य पार्श्वं प्रणेमु-
र्बहव इव गृहस्थाः पूर्वसेवां विधातुम् ॥ ४२ ॥

विविधजनपदस्थाः प्राक् श्रुतेभ्यो गुणेभ्यः
शतगुणगुणमेनं विस्मिता वीक्षमाणाः ।
मुकुळितकरपद्मा आस्यतामित्यवाप्ताः
प्रचुरतरहृदा सम्भावयाञ्चक्रिरेऽन्ये ॥ ४३ ॥

अलमलमनुवादेनानुवाच्येत पश्चात्
ननु गुरव इदानीमुद्यता हि प्रवक्तुम् ।
न मननमधुना द्रागाव्रजेत्याह्वयत् तान्
श्रुतपरिचयसक्तान् श्रावकाञ्छ्रावकाग्र्यः ॥ ४४ ॥

अधिकधिषणमेनं व्याख्यया शोभमानं
हरिमिव कविवर्यं सत्यवत्यास्तनूजम् ।
सततमनिमिषं सन्दृश्य सानन्दचित्ताः
समयमपि गतं संविद्रते न स्म लोकाः ॥ ४५ ॥

उदयमित इवास्तं यंश्च भानुर्बभासे
स्फुटमकलुषरूपो दर्शनीयोऽनुरागी ।
शुचि हरिपदमापत्सम्पदोराश्रितानां
न हि भवति विशेषः स्वप्रकाशोन्नतानाम् ॥ ४६ ॥

मरतकमणिवर्णे भूतधात्रीपुरन्ध्र्या
लसति जलधिवासस्यर्धलीनः क्षणार्धम् ।
अरुणतरणिबिम्बच्छद्मना पद्मरागः
कपिशकरकलापोल्लास्यभूत् प्रेक्षणीयः ॥ ४७ ॥

अवनिवनवनध्रुग्वायुखाहम्महत्सु
प्रकृतिगुणसमेताव्याकृताकाश एकम् ।
ततमतनुमनाः सोऽचिन्तयत् सत्समाधा-
वसुरसुरनरेभ्यः सद्गुणं नाथमन्यम् ॥ ४८ ॥

व्यदधत परिद्दष्टज्योतिषः साधु सान्ध्यं
नियममवनिदेवा ज्योतिषोऽप्यावलोकात् ।
विहितमनुसरन्तो धर्मशास्त्रप्रवीणाः
सवितरि सवितारं चिन्तयन्तस्त्रिलोक्याः ॥ ४९ ॥

विविदुरतितरां ये देवताः षोडशोक्ता
हरहरिहयपूर्वान्त्याः कलाभेदतोऽस्य ।
सुहुतमतिसृजन्तोऽग्न्याहितास्तेऽग्निहोत्रं
व्यधुरुचितमपूर्वं येन गायत्रलोकः ॥ ५० ॥

विधुरयमकळङ्कः स्याद्यदि स्यादवश्यं
ननु निजसहजायाः सुन्दरास्येन्दुकल्पः ।
इति सुरललनाभिर्लाळितः खेचरीभिः
समधिकमधुरिम्णा पूर्णचन्द्रस्तदोदैत् ॥ ५१ ॥

इनविरहमसह्यं प्राप्य पद्मै सचक्रै-
श्चिरमिह परितप्तं पूर्वतप्तैः सुतुष्टम् ।
मृदुकुमुदचकोरैः पादसङ्गेन राज्ञः
कमपि सकलहृद्यं कल्पयेन्नैव दैवम् ॥ ५२ ॥

दलितेन्द्रनीलमणिनीलविभ्रमं
नवकुन्दकुड्मळसितद्विजावलि ।
स्मितया नगोत्तमशिरस्सुजातया
वनमालया सुरभिताशयाऽन्वितम् ॥ ५३ ॥

मृदुगामिविमानसम्पदो रमयत्सुस्मितगोपसुन्दरीः ।
परितापविहीनमुज्ज्वलं सुततं सूक्ष्मतराम्बरं वरम् ॥ ५४ ॥

गोभिस्तमांस्यपनयन् गतिदं प्रजाना-
मर्थान्तरं स भगवान् प्रकटीचकार ।
आनन्दचिद्गुणगणं परिपूर्णसंवित्
चन्द्रस्तु शब्दगुणमित्ययमेव भेदः ॥ ५५ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते चतुर्दशः सर्गः ।

# पञ्चदशः सर्गः

भूयोबोधस्ततो भूयो व्याचख्यौ भाष्यमद्भुतम् ।
ग्रामे ग्रामीणसामान्ये वसंस्तत्रामरालये ॥ १ ॥

परपक्षरथारूढं खरतर्कमहायुधम् ।
त्रिविक्रमार्यं सोऽपश्यत् प्रतिवीरमिवाग्रतः ॥ २ ॥

तदा तदाननाम्भोजाद् वृत्तोपन्यासभारती ।
सेना सेनाग्रहा दिव्या शिबिरादिव निर्ययौ ॥ ३ ॥

नात्यत्वरा नातिरया नस्खलन्ती निरन्तरा ।
अनानावयवेत्येव दवीयोभिः प्रतर्किता ॥ ४ ॥

सूत्रस्यन्दनवृन्दाढ्या दुर्वारश्रुतिवारणा ।
सूपपत्तिमहापत्तिर्विचित्रस्मृतिसप्तिका ॥ ५ ॥

वर्धितोर्मिहरिप्रेष्ठा सुपयोधरसुस्वना ।
सवितानप्रकाशार्था सागरी श्रीरिवापरा ॥ ६ ॥

पद्मेशपदपद्मश्रित् कृत्याङ्गं पद्मजन्मनः ।
लाळिता शिरसेशेन गङ्गेवाशेषपावनी ॥ ७ ॥

नारायणोऽनन्तगुणो ब्रह्माख्यो वेदवेदितः ।
विश्वकर्तेति विश्वज्ञः श्रुत्या युक्त्याऽप्यसीषधत् ॥ ८ ॥

प्रधानमपराधीनं कारणं परिणामि यत् ।
पयोवदिति चेत् साध्यवैकल्यं स्यान्निदर्शने ॥ ९ ॥

विवादाध्यासिता सृष्टिश्चेतनेच्छानुसारिणी ।
सृष्टित्वात् पटसृष्टिर्वेत्यनुमा पक्षसाधिका ॥ १० ॥

यच्चेतनाचेतनयोरङ्गाङ्गित्वादि मन्वते ।
सृष्टावीशानपेक्षायां तन्न शोभनतां व्रजेत् ॥ ११ ॥

सर्वविन्निर्मितं सर्वं कादाचित्कत्वहेतुतः ।
न यदेवं नो तदेवं यथाऽऽत्मेतीश्वरानुमा ॥ १२ ॥

बलाय सर्वानुमानां वेदाः स्युर्यैरपालिताः ।
कामादेताः प्रवर्तन्ते कामिन्य इव भर्तृभिः ॥ १३ ॥

कारणं परिणामि स्याद् ब्रह्म नो चेतनत्वतः ।
न यदित्थं नो तदित्थं यथा क्षीरपुरस्सरम् ॥ १४ ॥

न विश्वकृत् पशुपतिः श्रूयमाणागुणत्वतः ।
चैत्रवत् किं पुनर्विघ्नब्रध्नाद्या बालशङ्किताः ॥ १५ ॥

ननु सौख्यादिमान्नेशो दुःखादिरहितत्वतः ।
यो नैवं स्यात् स नैवं स्याद् यथा संसृतिमानिति ॥ १६ ॥

एवं चेद् विमतो ज्ञानी न भ्रान्तिरहितत्वतः ।
य एवं नो स एवं नो भवीवेत्यनुमीयते ॥ १७ ॥

सर्वज्ञस्याज्ञतां वेदः श्रद्धेयो विरुणद्धि चेत् ।
तस्यैवामन्दमानन्दं वदन्नाश्राव्यसौ कथम् ॥ १८ ॥

दुःखं परिजिहीर्षन् यः सुखं नोरीचिकीर्षति ।
स हन्ताऽपतितं दुःखमीशस्य व्यस्मरज्जळः ॥ १९ ॥

यो दुःखसमवायोऽयं चैत्रे तेन ह्यभेदवान् ।
समवायः कश्चिदीशे तदनेकत्वमन्यथा ॥ २० ॥

औपाधिकोऽस्य भेदश्चेत् सत्योऽसत्यः स्विदुच्यताम् ।
तद् द्वयं चोक्तदोषं हि मायिवन्मा वदेत् परम् ॥ २१ ॥

ब्रूयुरौपाधिकं भेदं ज्ञानादीनां यदात्मनः ।
नीत्याऽनया तन्निरासात् स्यात् तस्यानन्तधर्मता ॥ २२ ॥

गुणादिभेदे सम्बन्धमपेक्ष्याप्यनवस्थितेः ।
विशेषमात्रेणानन्त्यं गुणानां शोभते विभोः ॥ २३ ॥

मन्यन्ते शून्यमेवान्ये तत्वमागमवैरिणः ।
मता माध्यमिकास्तेऽपि व्यक्ताऽच्छन्ना इति द्वये ॥ २४ ॥

शून्यं ब्रह्माह्वयेनाहुः स्वांश्च वेदान्तिनोऽभ्यधुः ।
अतत्वावेदकं वेदं वदन्तश्चरमे खलाः ॥ २५ ॥

परतत्वविवर्तत्वादपरस्याखिलस्य च ।
अविशेषत्वतश्चास्य नान्तरन्तरमेतयोः ॥ २६ ॥

अखण्डखण्डनन्यायानखण्डमपि खण्डयन् ।
अखण्डयदखण्डज्ञो द्वयांश्चाखण्डलद्विषः ॥ २७ ॥

विमतं कारणं न स्यादसत्वान्न यदीदृशम् ।
नेदृशं तद् यथा कुम्भकर्तेत्यत्रानुमीयते ॥ २८ ॥

अङ्गो तापस नो शून्यं कारणं कुम्भकर्तृवत् ।
यत्संवृत्युत्थितं विश्वं तत् कारणमितीर्यते ॥ २९ ॥

एवं चेत् कारणं मा स्म ब्रवीः शून्यं कथञ्चन ।
आयुष्मंस्तदधिष्ठानं व्युत्पित्सस्व गुरोर्गृहे ॥ ३० ॥

विवादस्य पदं न स्यादधिष्ठानमसत्त्वतः ।
वैधर्म्येणैष दृष्टान्तः शुक्त्यादिवदितीर्यते ॥ ३१ ॥

अतत्वावेदकं मानमिति स्वव्याहतं यतः ।
तद्वादी तेन वेदस्य सोऽभिप्रैत्यप्रमाणताम् ॥ ३२ ॥

यं तत्वावेदकं वेद वेदांशं वेददूषकः ।
तत्वस्यावर्णनीयत्वात् स तत्वावेदकः कथम् ॥ ३३ ॥

लक्षणाभिः प्रवर्तन्ते वाक्यानि तिसृभिर्यदि ।
विषयत्वं लक्षणानां तस्यैवानिष्टमागतम् ॥ ३४ ॥

किञ्चाखण्डेऽत्र वाक्यानि किञ्चिद् विदधते न हि ।
तान्यभ्यधुरभावं चेज्जाड्यादेस्तन्न शोभते ॥ ३५ ॥

अभावभावस्याभावाद् भावरूपस्य तस्य तु ।
भावाभावविशेषाणामभावादविशेषिणः ॥ ३६ ॥

यो वेदवेदितार्थानां नित्यसन्त्यागसंश्रवी ।
वेदबाह्यो विपश्चिद्भिरेष निश्चीयतां ततः ॥ ३७ ॥

ज्यायसो दूषणेनैव धूर्तम्मन्योऽपि दूषितः ।
पक्षयोरविशेषत्वादनयोः सद्विपक्षयोः ॥ ३८ ॥

असत्त्वादित्यसौ हेतुरसिद्धो ब्रह्मवादिनः ।
मेति भाण्यविशेषत्वादेतयोर्ब्रह्मशून्ययोः ॥ ३९ ॥

सोऽङ्गीकरोति चेत् सत्त्वं ब्रह्मणः स्याद् विशेषिता ।
न चेत् प्राप्तं पारिशेष्यादसत्त्वं न निरस्यतु ॥ ४० ॥

विगीतं न विचार्यं स्यान्न भाव्यं न फलप्रदम् ।
शून्यं ब्रह्माद्यमद्वैतं विधिधीगोचरो न यत् ॥ ४१ ॥

खपुष्पवदखण्डत्वाद् व्यतिरिक्तं निदर्शनम् ।
प्रमाणादिवदित्येवमूहनीयं यथेप्सितम् ॥ ४२ ॥

आम्नायानाममानत्वे धर्मादेरप्रमाणता ।
धर्माद्यभावे नो मानं प्रत्यक्षैकप्रमाणिनः ॥ ४३ ॥

न पौरुषेयं वचनं प्रामाण्येन विनिश्चितम् ।
पौरुषेयत्वतो यद्वद् वाक्यमुन्मत्तभाषितम् ॥ ४४ ॥

विमतः पुरुषोऽज्ञः स्यात् स्याच्चासौ विप्रलम्भकः ।
पुंस्त्वाच्चैत्रवदित्यस्ता सर्वज्ञे केवलानुमा ॥ ४५ ॥

दुःखाकरोति यद् दैवं दुःशास्त्रेषूग्र आग्रहः ।
दुःखाकरोऽतिघोरः स्याल्लोकोऽतस्तद्गतां ध्रुवः ॥ ४६ ॥

आस्माकेऽपेक्षिते पक्षे मोक्षं दद्यादधोक्षजः ।
यत्र स्वानन्दिनः सन्तः सेवन्ते विषयान् बहून् ॥ ४७ ॥

स्वव्याहृत्यादिनोपेक्ष्या मुक्तिर्या निर्विशेषिता ।
कदेत्याद्यनुयोगेऽस्या विशेषः स्यान्नतूत्तरे ॥ ४८ ॥

अपि बुद्ध्यादिरहितः पुरुषार्थी न सर्वथा ।
निखिलानुभवाभावात् पुत्तळीकापुरोगवत् ॥ ४९ ॥

ज्ञानप्रयत्नवाञ्छावानीशो न ह्यशुभं भजेत् ।
स्वसामर्थ्येन तेनैव तं च कुर्यात् स तादृशम् ॥ ५० ॥

दुःखव्याप्तं सुखं बद्धे दृष्ट्वा मुक्ते निरस्यता ।
स्वरूपं च निरस्येत शून्यवादी तदा भवेत् ॥ ५१ ॥

ननु विप्रतिपन्नः स्यादूर्मिमान् देहवत्त्वतः ।
चैत्रो यथेद्युपाधिः स्यात् तत्र चाशुद्धदेहिता ॥ ५२ ॥

अनैकान्तिकता हेतोर्देहवत्त्वादधीशितुः ।
सोऽदेहश्चेदनिच्छादिर्भवेच्छशविषाणवत् ॥ ५३ ॥

ज्ञात्रादिरूपमस्य स्याद् वैलक्षण्याय चेत् ततः ।
तदेव देहशब्दोक्तं न ह्यसौ प्राकृताकृतिः ॥ ५४ ॥

एवं स्वरूपदेहत्वं मुक्तस्याप्युररीकृतम् ।
नानिष्टभोगस्तेन स्यात् प्राकृतक्षेत्रसम्भवः ॥ ५५ ॥

विमतो नावयववान् विनाशित्वप्रसङ्गतः ।
पटवच्चेदवयवा निरस्यन्तेऽत्र कीदृशाः ॥ ५६ ॥

सिद्धसाधनता हेतोस्ते भिन्नाश्चेदचिन्मयाः ।
आत्मनो भेदरहिता एष्टव्या एव वादिभिः ॥ ५७ ॥

परमाण्वादिदेशेषु व्याप्त्यै व्यामादिकेष्वपि ।
यथाऽऽत्मनः प्रदेशाः स्युस्तेषां नोऽवयवास्तथा ॥ ५८ ॥

मुक्तो रूपादिवित्सत्वाज्जडान्यत्वे सतीशवत् ।
दृष्टान्तोऽसाध्यविकलस्तस्य सर्वज्ञताग्रहात् ॥ ५९ ॥

ईश्वरो न सुखी तेन रूपाद्यनुभवन्नपि ।
दुःखप्रसङ्गादिति मा वादि तद्व्याप्तिदूषणात् ॥ ६० ॥

दृष्टान्तो यस्य नेष्टोऽयं तस्य स्याद् व्यतिरेकवान् ।
शिलावदित्यतः शुद्धचिद्देहेन्द्रियभोग्यसौ ॥ ६१ ॥

स्वानन्दविषये मोक्षे वेदोक्ते युक्तिसाधिते ।
द्वेषोऽयं वादिनां कस्मात् तद्विरुद्धेऽथवाऽऽग्रहः ॥ ६२ ॥

ततः स्वतः प्रमाणेन देवो वेदेन वेदितः ।
विष्णुर्मोक्षस्य दातेति विश्वं भवति शोभनम् ॥ ६३ ॥

इत्यादीन् दर्शयन्त्यर्थान् व्याख्योपन्याससंयुता ।
त्रिविक्रमार्येण तदा विश्वाभिज्ञस्य शुश्रुवे ॥ ६४ ॥

अथ प्रायुङ्क्त विविधान् बोधचापगुणेरितान् ।
विपक्षयुक्तान् वीर्येण तीक्ष्णांस्तर्कशरानसौ ॥ ६५ ॥

चिच्छेदातुच्छधिषणस्तांस्तदा तर्कसायकैः ।
प्रयुक्तमात्रान् प्रहसँल्लीलयाऽतिशयालुभिः ॥ ६६ ॥

अधार्याणीतरजनैरनिवर्त्यानि पूरुषैः ।
विजिगीषुर्द्विजश्रेष्ठो वेदास्त्राणि प्रयुक्तवान् ॥ ६७ ॥

वाक्यैरतिबलीयोभिः प्रत्यस्त्रैरिव वैदिकैः ।
अर्थान्तरं प्रकटयन् तान्यसौ सन्न्यवर्तयत् ॥ ६८ ॥

सप्ताष्टानि दिनान्येवं वादं कृत्वा सहामुना ।
निरुत्तरं तं निश्चोद्यं चक्रे चक्रायुधप्रियः ॥ ६९ ॥

प्रणम्याऽचष्ट शिष्योऽसौ क्षम्यतां नाथ चापलम् ।
पदपद्मरजोदास्यं ध्रुवं मे दीयतामिति ॥ ७० ॥

व्याख्यां भाष्यस्य भूयोधीः श्रवणं सूरिनन्दनः ।
सन्तः प्रीतिमसन्तोऽन्यां सममारेभिरे ततः ॥ ७१ ॥

गुर्वाज्ञागौरवाट्टीकां कुर्वन् भाष्यस्य दुष्कराम् ।
षडर्धविक्रमार्योऽसौ महाचार्यमभाषत ॥ ७२ ॥

कवीन्द्रैर्न समाप्यन्ते सङ्गृह्यापि यतोऽनिशम् ।
न्यायरत्नानि भाष्याब्धेरस्य गाम्भीर्यमद्भुतम् ॥ ७३ ॥

दशोपनिषदो देवीर्देवा इव समीप्सिताः ।
युक्ताः प्रसादयन्त्यर्था एषु भाष्यालयेष्वलम् ॥ ७४ ॥

गीतातात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते ।
गोगणैरप्रतीकारैरर्केन्दुभ्यामिवाधिकम् ॥ ७५ ॥

इतिहासपुराणाब्धेर्भवच्चित्ताद्रिलोळितात् ।
जातां भारततात्पर्यसुधां कः सन्न सेवते ॥ ७६ ॥

पुराणस्थानपान्थानामभाषात्रयवेदिनाम् ।
भवता सुसखा चक्रे श्रीभागवतनिर्णयः ॥ ७७ ॥

कस्तन्त्रसारं सम्प्राप्य न स्यात् पर्याप्तवाञ्छितः ।
अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥ ७८ ॥

लोकानामवलोकाय मार्गस्यास्य व्यधाद् भवान् ।
करुणाकर नेत्राभे वादसन्मानलक्षणे ॥ ७९ ॥

एकाकी किल यश्चक्रे पदं मौलिषु विद्विषाम् ।
तत्वनिर्णयपार्थोऽयं केन नाम न पूज्यते ॥ ८० ॥

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ ८१ ॥

अनन्तोऽर्थः प्रकटितस्त्वयाऽणौ भाष्यसङ्ग्रहे ।
अहो आत्मपरिज्ञप्त्यै कृष्णेनेवाऽननान्तरे ॥ ८२ ॥

भगवंश्चित्रकवितां लौकिकीं दर्शयन् किल ।
गोप्यं भारतसङ्क्षेपमकृथा विश्वविस्मयम् ॥ ८३ ॥

नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः ।
त्वयि रत्नाकरे रत्नश्रेणीर्वा गणयन्ति के ॥ ८४ ॥

एषु दभ्रमतीन् दभ्रान् हसत्युच्चैः सतां सभा ।
चिन्तामणींश्चिन्तयन्ती मितानप्यमितार्थदान् ॥ ८५ ॥

अपरोऽपीष्यतेऽस्माभिर्ग्रन्थेष्वेतेषु सत्स्वपि ।
सत्स्वपीन्द्रादिषु पुरा तारकारिरिवामरैः ॥ ८६ ॥

ग्रन्थेभ्य एभ्योऽगाधेभ्यो युक्तयो नो दुरुद्धराः ।
मनोमान्द्यात् ततो ग्रन्थं व्यक्ततर्कततिं कुरु ॥ ८७ ॥

इत्यर्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् ।
दुर्वादिगर्वाद्रिपविं मायिध्वान्तरविद्युतिम् ॥ ८८ ॥

युगपद् रचयन्नेनां कदाचित् स निरन्तरम् ।
चतुरश्चतुरः शिष्यांल्लीलयाऽलेखयत् खलु ॥ ८९ ॥

युक्ताया युक्तिमालायाः प्रोक्तायास्तत्र चाऽत्मना ।
व्यक्तं चक्रे विवरणं कवीन्द्रैरेष दुष्करम् ॥ ९० ॥

मध्वेन्दोर्नित्यसम्बन्धान्निस्तमस्तापचेतसोः ।
वैकुण्ठं यातयोः पित्रोर्गेहेऽस्यावरजोऽवसत् ॥ ९१ ॥

विधिभ्रूविभ्रमभ्रश्यद्धनगोधान्यसम्पदा ।
निर्वेदिना वेदविदा तेनाऽपे वेदवादिराट् ॥ ९२ ॥

पारिव्राज्यं प्रार्थयन्तं पादानम्रमिमं मुहुः ।
समयापेक्षयोर्वीक्षो गमयामास धाम तम् ॥ ९३ ॥

न जघास न सुष्वाप न जहास स धीरधीः ।
समयार्थी स्मरन् ज्येष्ठं रामं रामानुजो यथा ॥ ९४ ॥

राज्ये कथञ्चित् संस्थाप्य राजानं विरहार्दितम् ।
अवतारभुवं प्रायाद् भगवान् शरदत्यये ॥ ९५ ॥

विशुद्धद्विकुलं श्रौतं शुचिं कृतपितृक्रियम् ।
विरक्तं विषयान् भुक्त्वा व्यधान्मध्वोऽनुजं यतिम् ॥ ९६ ॥

रहस्यतिरहस्यं तद् ब्रह्म ब्रह्मसमो ददौ ।
अमुष्मै पञ्चतपसो न विदुर्यत् तपस्विनः ॥ ९७ ॥

प्रेमामृतप्रसन्नास्यस्मिताङ्गापाङ्गपूर्वकम् ।
श्रीविष्णुतीर्थनामास्मै प्रीतितीर्थः प्रदत्तवान् ॥ ९८ ॥

श्रवणेनानुवादेन मननेनावृथाऽकरोत् ।
कालं वेदान्तशास्त्रस्य वेदान्तगुरुसोदरः ॥ ९९ ॥

स दान्तिभक्तिमाधुर्यपरिचर्यादिमेदुरैः ।
महाविटपिनं चक्रे गुरोः स्वस्थं कृपाङ्कुरम् ॥ १०० ॥

अनन्तमतिकारुण्यकल्पद्रुमवतो जनैः ।
अवर्ण्यो महिमा तस्य लौल्यात् संवर्ण्यते मनाक् ॥१०१॥

चतुरोऽसौ प्रवचने मनुसंसिद्धिमान् मनः ।
सङ्ख्या मां पूरणी मा गात् मध्वदासमिति व्यधात् ॥ १०२ ॥

दिशं प्रयातं शशिनश्चरन्तं पर्यशोधयत् ।
तीर्थकं विष्णुतीर्थं च विष्णुतीर्थश्च तीर्थकम् ॥ १०३ ॥

अकामानामनेकेषां सिद्धिभूमिं तपस्विनाम् ।
तिरोहितात्मा प्रापासौ हरिश्चन्द्रमहीधरम् ॥ १०४ ॥

द्वन्द्वदुःखानले वीरो मात्सर्येण विमत्सरः ।
तत्याज मत्या तस्यासावशनादीन्धनायितम् ॥ १०५ ॥

भक्तैरनुगिरं नीतं प्रार्थितो यतिशेखरः ।
पञ्चगव्यं पपौ किञ्चित् पञ्चमेपञ्चमे दिने ॥ १०६ ॥

स त्यजन् साहसी तच्च तपस्तेपेऽतितापसम् ।
बिल्वपर्णैः क्षितौ पन्नैस्तृप्तिमान् सलिलैरपि ॥ १०७ ॥

यथेष्टमध्यास्त शिलां यमी सुनियमी स ताम् ।
नाऽध्यासते यामेकाहं दैवभग्नास्तपस्विनः ॥ १०८ ॥

पवनांशानुजो जित्वा पवनं रेचकादिभिः ।
विषयेभ्यो हृषीकाश्वान् मनोयन्त्रा समाहरत् ॥ १०९ ॥

स्मरन् मुरारेराकारं दध्यावध्यात्मकोविदः ।
समाधिमाधिशमनं योगिलभ्यं स लब्धवान् ॥ ११० ॥

मौकुन्दे सुन्दरे रूपे स्वानन्दादिगुणार्णवे ।
स्वाश्चर्यरत्ने मग्नात्मा नान्यत् किञ्चिद् विवेद सः ॥ १११ ॥

कामत्रासविहीनस्य तस्य सुज्ञानचक्षुषः ।
विना कैवल्यसाम्राज्यं नार्घो योगमणेरभूत् ॥ ११२ ॥

मध्वानुजे मध्वनाथो यं प्रसादं व्यधात् तदा ।
स चित्ताविषयत्वाद्वा गोप्यत्वाद्वा न वर्ण्यते ॥ ११३ ॥

अहो महाबोधसेवामहिमाऽस्मिन् युगे यतः ।
धन्योऽसौ सिद्धिमापेमां सोऽमरैरित्यलाळ्यत ॥ ११४ ॥

तीव्रव्रतोऽतीन्द्रियविद् विद्याब्धिस्तर्कपण्डितः ।
अनिरुद्धपदाधारः प्रेष्ठः शिष्यस्तमाययौ ॥ ११५ ॥

तेन सम्प्रार्थितं यातं रूप्यपीठमिमं पुनः ।
कृत्स्नज्ञं कृपया स्वेषु सम्प्राप्तं मेनिरे प्रजाः ॥ ११६ ॥

कवीन्द्रतिलको विद्वच्छेखरस्तापसाग्रणीः ।
मध्वकेळीशुकोऽस्याभूच्छिष्यो व्यासपदाश्रयः ॥ ११७ ॥

असौ दास्यं ध्रुवं यातं महान्तं महतामपि ।
व्यधादनुग्रहं कुर्वन् सामर्थ्यैः कौतुकं नृणाम् ॥ ११८ ॥

आरुररोह दुरारोहं स परैः प्रीतिकृद्धरेः ।
महान्तं महिमानं च महीध्रं च गुहप्रियम् ॥ ११९ ॥

आकृष्टोऽस्य गुणैर्व्याप्तैर्यो गोदाया उपाययौ ।
स पद्मनाभतीर्थाख्यः शिष्योऽन्योऽभूत् सुचेतसः ॥ १२० ॥

श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।
यस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभाम् ॥ १२१ ॥

वेदान्ताब्धिं न यो जातु जहौ विद्वत्तिमिङ्गिलः ।
युक्तिप्रवाहसंरम्भात् परशास्त्रनदीचरः ॥ १२२ ॥

व्याख्याप्रणादमात्रेण वीरम्मन्यान् स्वमण्डले ।
मायाविग्रामसिंहान् यो वादिसिंहो निराकरोत् ॥ १२३ ॥

मत्तदुर्वादिमातङ्गतर्कमस्तकदारणे ।
पञ्चास्यो योऽभवद् व्यक्तं चतुरास्योऽपि केवलम् ॥ १२४ ॥

सन्न्यायरत्नावळिरप्युदपादि यतः परा ।
टीका पराऽनुव्याख्याया अनर्घा बोधसागरात् ॥ १२५ ॥

वेदप्रवचनाचार्यशिष्योऽसाविति पूजितः ।
सभ्यः सभायां यो वेदं व्याचख्यौ वेदसारवित् ॥ १२६ ॥

अनयोः प्रथमे शिष्याश्चरमे चाभवन्निह ।
अनन्तबोधस्यानेके यतीन्द्रा बहुदेशजाः ॥ १२७ ॥

वशीकृतहृषीकाश्च जननाद्युपमर्दिनः ।
नरसिंहपदाधारा अभ्यस्तोपेन्द्रनामकाः ॥ १२८ ॥

अदीर्घान्याभिधाना ये श्रीमद्रामपदाश्रयाः ।
अप्रत्यक्षगुणोद्रिक्ता भक्तिवैराग्यसागराः ॥ १२९ ॥

पादैः पुनन्तः पृथिवीं दर्शयन्तो हरेः पदम् ।
धूतदुःसमयध्वान्ता भास्करा इव गां गताः ॥ १३० ॥

मोक्षशास्त्रामृताम्भोधिसेवया नित्यनिर्वृताः ।
चक्रिचारुतरार्चासु चक्रिणश्चरणार्चकाः ॥ १३१ ॥

मध्वप्रशिष्या बहवो शिष्या एषां मुहुस्तथा ।
अलञ्चक्रुरलं पृथ्वीं सर्वे सद्गुणभूषणाः ॥ १३२ ॥

सदा सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः ।
सर्वे दुर्वादिदुर्वादकाण्डखण्डनमण्डनाः ॥ १३३ ॥

भूरिभक्तिभराः केचिदप्यल्पश्रुतसम्पदः ।
अप्यल्पबोधा अपरे बहुश्रुतमहागुणाः ॥ १३४ ॥

बहवो गृहिणो यस्मात् समग्रानुग्रहं ययुः ।
दीप्रा यत्राग्नय इव त्रयो लिकुचशेखराः ॥ १३५ ॥

माध्वं नियोगं ये प्रायो नात्यजन् विदुषां वराः ।
शिष्यक्षेत्रेषु सद्विद्याबीजावापैकदीक्षिताः ॥ १३६ ॥

ग्रामण्यो ब्राह्मणाग्रण्यः प्रापुः पूर्णेक्षशिष्यताम् ।
येषां सद्धृप्तिमात्रेण भवेत् किल परं पदम् ॥ १३७ ॥

शुश्रूषापक्षपाताद्यैः केभ्यश्चित् केवलं ददौ ।
रामप्रियो राम इव स्वां गतिं योगिदुर्लभम् ॥ १३८ ॥

शिष्यप्रशिष्यातिशया ईदृशा यद्दयोदयात् ।
को नेच्छेत् सुलभं भक्त्या तत्पादसुरपादपम् ॥ १३९ ॥

इत्थं सद्भिः सद्भिरर्च्यो धरायां
चक्रे वासं शेषशय्ये शयाने ।
ग्रामे वातैः पाविते काण्वतीर्थै-
र्भक्तप्रीत्या सन्मठेऽनूनबोधः ॥ १४० ॥

आनन्दतीर्थभगवद्वदनेन्दुबिम्बं
विद्यासुधावितितकान्ति सुकान्तिकान्तम् ।
यैः प्रेक्ष्यतात्र भवतापशमाय भक्तै-
स्तद्दासदास्यमपि किं न ददाति पुंसः ॥ १४१ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते पञ्चदशः सर्गः ॥

# षोडशः सर्गः

साधुभ्यो मधुमथनाङ्घ्रिभक्तिभाग्भ्यः
श्रौतेभ्यो विततमतेर्महानुभावम् ।
वेदान्तं स्वयमिव बन्धमोक्षमूलं
व्याचष्ट स्फुटमथ कोऽपि कोविदोऽत्र ॥ १ ॥

गोमत्यास्तटनिकटेऽच्छकीर्तिचन्द्रं
विश्वज्ञं क्षितिपतिरन्त्यवर्णजन्मा ।
विद्वेष्टा श्रुतिगुणसाधकं श्रुतीनां
वाचालो वचनमुवाच वाग्मिवर्यम् ॥ २ ॥

उन्मत्तप्रलपितवन्न तद्धि मानं
यद्वाक्यं व्यभिचरति क्वचित् फलेऽत्र ।
दृष्टान्तो भवति तदप्रमाणतायां
सर्वेषां श्रुतिवचसां च सर्वथेति ॥ ३ ॥

वेदोक्तं फलमलमाप्यतेऽधिकारा-
दित्युक्तोऽतनुमनसाऽभ्यधत्त धूर्तः ।
योग्यत्वे सति नहि दृश्यतेऽधिकारी
नातः स्यात् स खरविषाणवत् सदेति ॥ ४ ॥

आक्षेपं तमसहमान उच्चमानः
सद्योऽसौ निजकरपल्लवद्वयेन ।
आदाय व्यतनुत बीजमोषधीनां
सूक्तेनाङ्कुरदलपुष्पबीजसृष्टिम् ॥ ५ ॥

व्याख्याता निशि स कदाचन प्रदीपे
संशान्ते पुनरपि वाचयाम्बभूव ।
शिष्यान् स्वान् पुरुकरुणाम्बुधिर्निजाङ्घ्रे-
रङ्गुष्ठस्फुटनखरान्तरोचिषैव ॥ ६ ॥

तीर्थार्थं पृथुतरवप्रपातिवारां
धाराणां रयसहनक्षमां महेक्षः ।
आनीतां दशशतपुम्भिरत्यशक्त्या
प्रेक्ष्योचे विपुलशिलां क्वचित् स मुक्ताम् ॥ ७ ॥

लोकानामुपकृतये कुतः शिलेयं
निन्ये नो इति जनता जगाद तत्र ।
नेतारो यतिवर मानवा न ह्रीमां
भीमश्चेदिह यतते नयेन्न वेति ॥ ८ ॥

निन्ये तां गिरिमिव वानरीकृतात्मा
लीलावत्करकमलेन सोऽमलेन ।
तत्रापि न्यधित तयाऽस्य सूच्यतेऽलं
तत्तुङ्गां ननु निकषाऽधुनाऽपि कर्म ॥ ९ ॥

सङ्घातैरधिकघनैरलङ्कृताध्वा
शिष्याणां यतमनसामुतेतरेषाम् ।
यत्रामा वसति तिथाविनेन चन्द्र-
स्तत्रासौ सकलमतिः ससार सिन्धुम् ॥ १० ॥

आर्द्राङ्गाः सपदि निमज्जनात् सरस्यां
कण्वस्य द्विजवृषभस्य वल्लभायाम् ।
तत्रायन् खरकिरणोपरागहेतो-
र्ग्रामीणा अपि सकलाः सबालवृद्धाः ॥ ११ ॥

सर्वज्ञं सपरिजनं समीक्षमाणाः
फुल्लाक्षाः स्मितवदनाः शुभा ननन्दुः ।
दौर्मुख्यं दधत उतापरे निनिन्दु-
र्नाश्चर्यं द्वयमपि तत् स्वभावतन्त्रम् ॥ १२ ॥

मा मैनं भुवनगुरुं विनिन्दतेत्थं
निर्भत्स्याभ्यपतदिवोत्तरङ्गहस्तः ।
सङ्क्षोभी घनघनघोषघोरवेषः
संरम्भी खलदमनाय सिन्धुराजः ॥ १३ ॥

सम्मोदात् तरळतरो द्रुताभिगामी
गम्भीरस्वननुतिमान् सुफेनहासः ।
वीच्यङ्गैरधिकतरैरिहाधिवेलं
मध्वाय प्रणतिमिव व्यधात् समुद्रः ॥ १४ ॥

गोलीलास्वतिशयिनावगाधभावा-
न्नोल्लङ्घ्यौ विविधगुणप्रकाशरत्नौ ।
मध्वाब्धी परममतेः प्रियं जनानां
लावण्यं न तु जलधेरयं विशेषः ॥ १५ ॥

अम्भोधेस्त्वरिततरोर्मिपाणिमृष्टे
स्वच्छेऽसौ विकटतटासने निषण्णः ।
व्याचख्यावतिचिरमैतरेयशाखा-
सूक्तानि प्रभुरतिसुन्दरप्रकारम् ॥ १६ ॥

गाम्भीर्यात् स्वनमधरीकरोति सिन्धोः
श्राव्यत्वं वहति तथाऽप्यहो स्वनोऽस्य ।
पूर्णेन्दुप्रभवदनः क एष धन्यो
मत्वेत्थं जनजलधिस्तमाशु पर्यैत् ॥ १७ ॥

वेदानां समुचितभाववाददक्षं
ये वेदद्विषमिममूचिरे महेर्ष्याः ।
धिग्धिक् तानिति जनता जगाद तत्र
स्वाश्चर्यात् किल कलिताञ्जलिर्नमन्ती ॥ १८ ॥

सन्नामं विपुलहृदे विधाय भक्त्या
बिभ्राणाश्चरणरजः सुरेन्द्रसेव्यम् ।
तत्स्नानादधिकशुचौ नदाधिराजे
सस्नुस्ते द्विजनिकराः प्रशस्तकाले ॥ १९ ॥

कल्लोलैः करिनिकरैरिवानिवार्यै-
रुल्लोलैर्जननिकरान् निपातयद्भिः ।
आक्रान्ताः प्रबलतरैश्च लोठ्यमाना
हास्यत्वं प्रययुरुदन्वतीह नैके ॥ २० ॥

मज्जन्तं पृथुलहरीनिगूढमूर्तिं
सम्पूर्णप्रमतिमसज्जनो जहास ।
यो लोकत्रयविजयी गुरुः प्रसिद्धः
सोऽयं ही पतति लघूर्मिलीलयेति ॥ २१ ॥

नीचानामवचवचांस्यजीगणन्नो
दभ्राणां क्षुभितकराण्यदभ्रबोधः ।
क्रोष्टूनां श्वकळकळप्रदं विरावं
पञ्चास्यो न हि गणयेदुदार्यवीर्यः ॥ २२ ॥

जन्मस्थित्यवसितिदायिनं कटाक्षं
लोकानामघटयदम्बुधौ बृहद्धीः ।
आक्रान्तोऽधिकगुरुणा स तेन ताव-
न्मुञ्चन् सञ्चलनमभूत् तटाकदेश्यः ॥ २३ ॥

इत्याद्यैरपि चरितैरनन्यसाध्यै-
र्न स्थेष्ठां बहुमतिमाप दुर्जनोऽस्मिन् ।
विद्वेषं व्यधित पुनर्निरस्तभाग्ये
तस्मिन् दुर्मनसि तदेव शोभनं स्यात् ॥ २४ ॥

सम्प्राप्तं सह सहजेन गण्डवाटं
स्वोजस्सम्प्रकटन आदिशद् विशङ्कम् ।
शुश्रूषामयमुचितो विधातुमीष-
ल्लोकानामिति वचसा परीक्षकाणाम् ॥ २५ ॥

श्रीकान्तेश्वरसदनेऽनयत् किलैको
यस्त्रिंशन्नरवरनीतकेतुयष्टिम् ।
आहत्या गुरुगदयैव नाळिकेरा-
द्यो लेभे तरळतरात् फलानि कामम् ॥ २६ ॥

एतादृग्बलविभवः स तस्य कण्ठं
तज्ज्येष्ठोऽप्यभित उभौ समं गृहीत्वा ।
निष्पेष्टुं परममवापतुः प्रयत्नं
सङ्घर्षात् क्रमपरिवर्धमानतैक्ष्ण्यम् ॥ २७ ॥

आस्विन्नावलसतरौ गुरोर्नियोगा-
च्छत्राग्रयानिलमहितौ च तावुभाभ्याम् ।
मुक्त्वाऽयःकठिनतरत्वचं शिरोधिं
पर्यायस्फुटवचनां निपेततुः कौ ॥ २८ ॥

आश्वस्तौ शुचिहृदिमावनूनमाना-
वुद्धर्तुं समगददङ्गुलिं धरास्थाम् ।
सङ्गृह्य प्रसभरसादपि प्रयत्तौ
सामर्थ्यं ययतुरिमौ न कम्पनेऽस्याः ॥ २९ ॥

निर्यत्नं वटुमधिरुह्य मन्दहासी
स प्रायादिह परितो नृसिंहगेहम् ।
ऐश्वर्यैरिति लघिमादिकैरुपेतो
मध्वोऽभूत् त्रिभुवनचित्ररत्नराजः ॥ ३० ॥

पश्चाशन्नरपनरोपनीतमात्रां
यो वार्क्षीं गृहमधिरोहिणीं निनाय ।
स व्याख्यास्वरदमनाय पूर्ववाटो
निर्देशाद् व्यधित गुरोर्गळप्रपेषम् ॥ ३१ ॥

स्विन्नेऽस्मिन्नपि यतमान आग्रहोग्रे
प्राच्यात् तत्प्रवचननिस्वनोऽतिरेजे ।
उद्धर्तुं विपुलहृदङ्गुलीं च नालं
सोऽभूदित्यजनि कुतूहलं जनानाम् ॥ ३२ ॥

पर्यैक्षि प्रभुरितरैः शिवाग्निपूर्वै-
र्नोपैक्षि प्रबलतरैस्तथा प्रयत्नैः ।
नावैक्षि क्वचिदपि शक्त्यपूर्तिरस्मि-
नुत्प्रैक्षि स्वयमपि भीम इत्यवश्यम् ॥ ३३ ॥

लेखिन्यां मुहुरपिनह्य कृष्यमाणं
नाप्येकं तनुरुहमस्य तूदपाटि ।
नासाग्रे मृदुनि कृतैश्च मुष्टिघातै-
र्नास्येन्दोरतिबलिभिः प्रसन्नताऽऽसि ॥ ३४ ॥

पञ्चास्यः श्वभिरिव ही विहीनसारै-
रम्भोधिर्नगसरितां जलैरिवाल्पैः ।
खद्योतैरिव तरणिर्विडम्बयन् नॄन्
प्रत्यर्थिस्वसमनरैर्व्यवाहरत् सः ॥ ३५ ॥

पारन्तीसुरसदनं विशालसंवित्
सम्प्राप्तः खलु सुचिरान्निवेद्यहीनम् ।
ग्राम्याग्र्यक्षितिपतिभिर्दिनार्धमात्रात्
तद्भूतीर्व्यधित सभूतबल्यनल्पाः ॥ ३६ ॥

भीमत्वे सह सहजैः प्रतिष्ठितः प्राक्
पश्चात्मा मुररिपुरश्रितो यदत्र ।
पाश्चाल्या बलिसलिलं समं ददत्या
सोऽस्मार्षीत् तमिममथ प्रपूज्यपूज्यः ॥ ३७ ॥

आयास्यन् किल सरिदन्तराख्यदेशं
ग्रीष्मे निर्जलमिह शुश्रुवांस्तटाकम् ।
तत्काले परमभिवर्षयन् घनौघं
तत्पूर्त्यै व्यधित कुतूहलं जनानाम् ॥ ३८ ॥

दुर्मन्त्रैः खलपटलैः प्रचोद्यमानो
ग्रामेशो वृषळपतिः प्रहर्तुमेनम् ।
सम्प्राप्तस्तत उत यान्तमीक्षमाणः
प्रोद्यन्तं रविमिव विस्मितो ननाम ॥ ३९ ॥

क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं
प्रस्थाय प्रचुरतरान्तरः प्रभावी ।
श्रीकृष्णामृतपरमार्णवाभिधानां
चक्रे सद्वचनततिं स्वभक्तभूत्यै ॥ ४० ॥

स ग्रामं परमपि यात उच्चभूतिं
विद्वांसः क्व कुहरकूपदर्दुराभाः ।
इत्यूचे मदमतिमानिनोऽखिलज्ञ-
म्मन्यस्य क्षपयितुमेव तज्जनस्य ॥ ४१ ॥

सर्वज्ञोऽप्ययमधिकं न यज्ञभङ्गीं
संवित्ते यतिरिति बद्धनिश्चयोऽसौ ।
आभान्तं परिषदि मत्सरादपृच्छत्
कर्मार्थश्रुतिगहनार्थखण्डभावम् ॥ ४२ ॥

छन्दोभ्यश्च्युतरससङ्ग्रहप्रवीणान्
षष्ठेऽह्नि प्रतिविहितान् प्रजाधिपेन ।
नाराशंस्यचरमचारुमन्त्रभेदा-
नूचेऽसौ तमभिदधद् विसंशयांशः ॥ ४३ ॥

पाण्डित्यं परममवेत्य तस्य तादृक्
सङ्घर्षक्षुभितमना विपक्षसङ्घः ।
नार्थः स्यादयमिति वर्णयन्नथ त्वं
तं ब्रूहीत्युरुमतिनेरितोऽद्रवद् द्राक् ॥ ४४ ॥

सोऽपृच्छत् तमथ महाह्वयोपसर्गा
यत्रोक्ता मनुचरणोपसृज्यरूपाः ।
तस्यार्थं वचनचयस्य तं ब्रुवाणः
स्थैर्यार्थं सपदि स लेखयाम्बभूव ॥ ४५ ॥

सम्पूर्णं शशिनमिवोदितं कृशः श्वा
चुक्षोभाशुभनिकरो निरीक्ष्य मध्वम् ।
प्रत्यर्थी स्वयमिति दूरवोऽभिधावन्
किं तेन क्षतममृताकरस्य तस्य ॥ ४६ ॥

निःस्वानां कतिपयभुक्तियुक्तभक्तं
भक्तानां व्यधित चतुर्गुणं दयालुः ।
भुङ्क्ते स्म त्रिदशनरोपभोग्यमन्नं
सम्प्रीत्यै स धनवतां बृहत्प्रबोधः ॥ ४७ ॥

वृष्ट्यादेः स नियमनादि चक्र एत-
चित्रं किं भुवननियामके समीरे ।
अप्येवं भुवनगुरोः कृतानुवादः
कृत्येषु प्रवर इतीह वर्णयामः ॥ ४८ ॥

इत्यूचे धरणिधरेण केवलं नो
माध्वीयं विविधकथा कथासु मान्या ।
साक्षादप्यमरवरैरुदीर्यमाणा
गन्धर्वैर्द्युसदसि तन्मुदे जगेऽसौ ॥ ४९ ॥

तां पद्यप्रणिगदितां तु मूर्छयित्वा
तानानामुचिततयाऽऽत्तपञ्चमाद्याः ।
गान्धारं द्युविषयमुज्ज्वलं सृजन्तो
ग्रामं ते प्रजगुरकाकिकम्रकण्ठाः ॥ ५० ॥

आनम्रैः समकुटमौलिभिः कराग्रयै-
राताम्रैः प्रतिकलितैः स्मितैर्मुखाब्जैः ।
आश्रावि स्थिरतरभक्तिभिः सुरेन्द्रै-
स्तद्गीता दशधिषणार्यवर्यचर्या ॥ ५१ ॥

गीर्वाणैर्विजयमहोत्सवस्य पूजां
कुर्वाणैरविरळसंविदस्तदानीम् ।
विस्मेरैर्मुनिनिकरोपदेवयुक्तैः
सुस्मेरैरथ तमवेक्षितुं प्रजग्मे ॥ ५२ ॥

आदर्शं गुणगणदर्शने मुरारेः
सच्छास्त्रं रचितमनेन वर्णयन्तः ।
प्रद्योतैरुडुपदवीं प्रकाशयन्तः
प्रैक्षन्त प्रचुरमनोविलासमेते ॥ ५३ ॥

नाकीन्द्रास्तमवनिभागमावसन्तं
सुश्लोकैरपि भुवनानि भूषयन्तम् ।
नेमुः खादुपनिषदं तदैतरेययीं
व्याख्यान्तं विविधविशिष्टशिष्यमध्ये ॥ ५४ ॥

श्रीमन्तं शशिवदनं कुशेशयाक्षं
गम्भीरस्वरमतिदिव्यलक्षणाढ्यम् ।
पश्यन्तः स्वगुरुमथाऽर्चिचन् कृतार्था
वाण्या तं हरिरतिपूर्णकाममेते ॥ ५५ ॥

अहरो दुरागमतमः स्वगोगणै-
रकरोर्मुकुन्दगुणवृन्ददर्शनम् ।
अजयश्चतुर्दश जगन्ति सद्गुणैः
शरणं गुरो करुणयाऽपि नो भवेः ॥ ५६ ॥

नमस्ते प्राणेश प्रणतविभवायावनिमगा
नमः स्वामिन् रामप्रियतम हनूमन् गुरुगुण ।
नमस्तुभ्यं भीम प्रबलतम कृष्णेष्ट भगवन्
नमः श्रीमन् मध्व प्रदिश सुदृशं नो जयजय ॥ ५७ ॥

इति निगदितवन्तस्तत्र वृन्दारकेन्द्रा
गुरुविजयमहं तं लाळयन्तो महान्तम् ।
ववृषुरखिलदृश्यं पुष्पवारं सुगन्धं
हरिदयितवरिष्ठे श्रीमदानन्दतीर्थे ॥ ५८ ॥

इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यसुत-
नारायणपण्डिताचार्यविरचिते श्रीमध्वविजये
आनन्दाङ्किते षोडशः सर्गः ॥